॥ श्रीगिरिजा विजयते ॥

# जातकक्रोडाभिधोऽयं ग्रन्थः ।



दरभङ्गामण्डलान्तर्गतभषराव्यग्रामनिवासिनो झोपा[illegible]
श्रीबबुएशर्मणस्तनूजेन ज्योतिःशास्त्राध्यापकेन
श्रीकृष्णदत्ताभिधेन विरचितः ।



स च



मुज़फ़्फ़रपुरनगरस्थ-ज्यौतिषाचार्य-ज्यौतिषतीर्थ-

## श्री पं० शशिकान्त झा महोदयैः

**स्वीयद्रव्यव्ययेन**

काश्यां

विश्वेश्वरगञ्जे-"ज्योतिष-प्रकाश नाम्नि"
यन्त्रालये बी० के० शास्त्रि द्वारा
मुद्रयित्वा प्रकाशितः ।



द्वितीयावृत्तिः ]  वि० सं० १९९३




❀ श्रीगणेशाय नमः ❀

# * जातकक्रोडम् *





पादसरोजयुगं गिरिजायाः सन्दिशतु प्रतिपत्तिमलं मे। निन्दितकुङ्कुमरागकलापं धौतमनीषिकुबुद्धिकलापम् ॥ १ ॥ कृष्णदत्ताभिधः कृष्णदेवः सदा नौम्यहं कृष्णदेवं सकृष्णं परम्। युक्तकृष्णाम्बरं भिन्नकृष्णाब्जभं कृष्णकण्ठप्रियं प्राप्तकृष्णातटम् ॥२॥

तत्रादौ तावद्द्वितीयपद्यं दुरूहत्वान्मयैव व्याख्यायते। सदा नौमि। कः। कृष्णदत्ताभिधोऽहम्। किम्विशिष्टः। कृष्णदेवः। अत्र बहुव्रीहिर्विग्रहो बोध्यः। कम्। कृष्णदेवम्। देवकीतनयम्। किम्विशिष्टम्। सकृष्णं कृष्णया राधिकया सहितम्। पुनः किम्विशिष्टमिति प्रतिविशेषणं सम्बध्यते। परमुत्कृष्टम्। तथा युक्तकृष्णाम्बरम कृष्णाम्बरेण बलदेवेनसहितम्। तथा भिन्नकृष्णाब्जभम् नाशितनीलकमलकान्तिम्। तथा कृष्णकण्ठप्रियम् कृष्णकण्ठः शिवः। अत्र बहुव्रीहिस्तत्पुरुषो वेति विग्रहो बोध्यः। तथा प्राप्तकृष्णातटम्। प्राप्तयमुनातटम् ॥

**जातकक्रोडमत्यन्तरम्यं स्फुटं यद्विना नो भवेद्दैवज्ञाशंसनम् । सज्जनप्रीतिदं सप्रमाणत्रयं वच्म्यहं कृष्णदत्ताभिधो विद्वरः॥ ३ ॥**

इष्टफलं प्रमा तत्साधनं प्रमाणम्। तच्च त्रिविधं दृष्टमनुमानमाप्तवचनमिति। इन्द्रियसन्निकृष्टार्थज्ञानं दृष्टं प्रत्यक्षप्रमाणमिति। पर्वतो वह्निमान्धूमादित्याकारकज्ञानं यत्तदेवानुमानप्रमाणम्। वेदमूलस्मृतीतिहासपुराणवाक्यजनितं ज्ञानमाप्तवचनमागमप्रमाणाख्यम्। प्रकृते तु वेधजनितं ग्रहमन्दोच्चपातभगणादीनां ज्ञानं यत्तत्प्रत्यक्षप्रमाणम्। यत्प्रत्ययेन शृंगोन्नतिग्रहयुतिग्रहणोदयास्तच्छायादिकानांप्रतीतिरुत्पद्यते तदेवानुमानप्रमाणम्। युक्तिप्रमाणाख्यम् सूर्यसिद्धान्तमूलार्थवचनजनित ज्ञानमागमप्रमाणाख्यम्। यथा भवलयस्य प्रवहाख्यसमीरे निवेशनं तथा ध्रुवबिन्दू स्थिराविति। अत्रेदमवधेयम् प्रमाणत्रयेपि प्रत्यक्षानुमानप्रमाणद्वयं बलवत्। तत्राप्यनुमानप्रमाणं बलवत्तरम्। तथोक्तं श्रीभास्कराचार्येण युक्त्या ये सिद्ध्यन्ति त एव ग्राह्याः। तत्वविवेकीयमध्यमाधिकारोक्तमपि "सुयुक्ता न मुन्युक्तिरप्यत्र शास्त्रेभवत्कार्यवर्यस्य यादृग्विरुद्धेति। अनेन प्रमाणत्रयेण सहितमन्यत्सुगमम्। अथप्रारिप्सितकथनकारणं प्रतिपाद्यते। तत्र तावज्ज्योतिःशास्त्रं स्कन्धत्रयं सुप्रसिद्धमस्ति। तथा च नारदः। "सिद्धान्तसंहिता होराकरूपस्कन्धत्रयात्मकम्। वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम्॥ १॥ विनैतदखिलंश्रौतं-

स्मार्त्तकर्म न सिद्ध्यति । तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥२। अत एव द्विजैरेतदध्येतव्यं प्रयत्नतः !! ज्योतिःशास्त्र-प्रयोजनं कश्यपोक्तम् । "ग्रहणग्रहसंक्रान्तियज्ञाध्ययनकर्मणाम् । प्रयोजनं व्रतोद्वाहक्रियाणांकालनिर्णयः" अथ कश्यपोक्तज्योतिः शास्त्रप्रवर्तका एते । " "सूर्यःपितामहोव्यासोवशिष्ठोऽत्रिःपरा-शरः । कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥ लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः । शौनकोष्टादशाश्चेते ज्योतिः शास्त्रप्रवर्त्तकाः ॥" सिद्धान्तशिरोमणौ ज्योतिःशास्त्रवेदाङ्ग-संस्थापनम् । "वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्ता तेतु कालाश्रयेण । शास्त्रादस्मात्कालबोधो यतः स्याद्वेदांगत्वं ज्योतिषस्योक्तमस्मात्" ॥ वेदाङ्गानि शिक्षायाम् । " शिक्षा-घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् । ज्योतिषामयनं चक्षु-र्निरुक्तं श्रोत्रमुच्यते । छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।" ननु कथं ज्योतिषं श्रौतस्मार्तकर्मोपयोगिकमितिचेत् । उच्यते । "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत । तथा वसन्ते ब्राह्मणोऽग्निनादधीत दर्शपौर्णमासाभ्यां यजत ।" इत्यादि श्रुतयः सन्ति । तत्र वर्षज्ञानं सूर्यादिग्रहचारवशेन साध्यम् । वसन्ताद्यृतूनां च दर्शपौर्णमासयोश्च ज्ञानं ज्यौतिषं विना सर्व-थैव न निर्वहत्तीत्यवश्यमध्येतव्यं ज्योतिषशास्त्रम् । वेदाङ्गमध्ये-ज्योतिःशास्त्रस्यमुख्यता भारद्वाजशिक्षायाम् । "यथा शिखा मयूराणां नागानां मणयो यथा । तद्वद्वेदांगशास्त्राणांज्योतिषं मूर्धनिस्थितम् ।" तथा च वशिष्ठसिद्धान्ते-वेदस्य चक्षुः किल-

शास्त्रमेतत्प्रधानताङ्गेषुततोर्थंजाता। अङ्गैर्युतोऽन्यैःपरिपूर्णमूर्त्तिश्चक्षुर्विहीनः पुरुषो न किञ्चित् । सिद्धान्तलक्षणे सिद्धान्तशिरोमणौ। "त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच्चारश्चद्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः॥ भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते। सिद्धान्तः स उदाहृतोऽत्रगणितस्कन्धप्रबन्धे बुधैः॥" तत्प्रशंसनं शिष्यधीवृद्धिदे। "शशधरकिरणैर्विनाप्रदोषः कुचरहितं ललनाजनस्य वक्षः। मधुररसविवर्जितं च भोज्यं न किमपिगोलविवर्जितञ्च तन्त्रम्। ॥ युगादेरारभ्य खेटादिचलनं यत्र तत्तन्त्रम्। यथा मकरन्दाभिधः। एवमिष्टशकादारभ्य खेटादिचारकलनं यत्र तत्करणसमाख्यं यथा ग्रहलाघवादि ग्रन्थाः॥ प्रकृतभवं शुभाशुभफलं लग्नखेटाधीनं तच्च गणिताधीनं तद्गणितं वासनाधीनं यतो वासनां विना लग्नादिसाधने व्यामोहापत्तिः स्यात्तद्गणितभूरिभेदविशेषवशात्। तेनोपपत्तिं विना फलकथनं न भवितुमर्हति। परं सा वासना सिद्धान्तविद्याधीना अतः सिद्धान्तविद्याकुशलस्यैव फलादेशे मुख्यता वरीवर्ति। तथा चोक्तं जातकाभरणे। "होरागमव्योमचरानुसारस्तेषांविचारः सुतरामुदारः। सिद्धान्त एवाकलनं तदास्याभ्यासो यदा स्याद्गणितद्वयस्य॥ १॥ "अपारहोरागमपारगामी पाट्यां च बीजे सुतरां प्रगल्भः। सद्गोलविद्याकुशलः स एव भवेत्फलादेशविधौ समर्थः॥ २॥ "एतत्पठनफलं सूर्य्यसिद्धान्ते" दिव्यं चक्षुर्ग्रहाणां तु दर्शितं ज्ञानमुत्तमम्। विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम्॥"

तथा वराहः । "न साम्वत्सरपाठी च नरकेषु प्रपद्यते । ब्रह्मलोकप्रतिष्ठां च लभते देवचिन्तकः ॥" तथा च गर्गः । "ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् । ज्योतिर्ज्ञानं तु यो वेद स याति परमांगतिम् ॥" पुनर्वराहोक्तम् ॥ "नासाम्वत्सरिकेदेशे वस्तव्यंभूतिमिच्छता । चक्षुर्भूतोहि यत्रैष पापं तत्र न विद्यते ॥१॥ मुहूर्ततिथिनक्षत्रमृतवश्चायनेपि च । सर्वाण्यैवाकलानि स्युर्न स्यान्साम्वत्सरो यदि ॥" ज्योतिशास्त्राध्ययने फलमाह माण्डव्यः । "एवं विधस्य श्रुतिशास्त्रनेत्रस्वरूपभर्त्तुः खलु दर्शनं वै । निहत्य शेषं कलुषं जनानां षडङ्गजं धर्मसुखास्पदं स्यात् ॥" अथ ज्ञानविशेषेण ज्योतिःशास्त्रविदः पूजा जोर्णैरभ्यधायि "दशदिनकृतपापं हन्ति सिद्धान्तवेत्ता त्रिदिनजनितदोषं तन्त्रविज्ञः स एव । करणभगणवेत्ता हन्त्यहोरात्रदोषं जनयति बहु पापं तत्र नक्षत्रसूची ॥" नक्षत्रसूचीलक्षणं वराहोक्तसंहितायाम् ॥ "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥१॥ तिथ्युत्पत्तिं न जानन्ति । ग्रहाणां नैव साधनम् । परवाक्येन वर्त्तन्ते ते वै नक्षत्रसूचकाः ॥ २ ॥ नक्षत्रं सूचयतीति नक्षत्रसूची । "नक्षत्रसूचकोद्दिष्टमुपवासं करोति यः । स व्रजत्यन्धतामिश्रं सार्धमृक्षविडम्बिना । नक्षत्रसूचकं पापं भिषजं शुक्रजीवनम् । तादृक्पौराणिकादींश्च वाङ्मात्रेणापि नार्चयेत् । ॥ नक्षत्रविडम्बिना नक्षत्रसूचकेन सहान्धतामिश्रं नरकं व्रजति । तेनायथार्थशास्त्रमादेशक एव नक्षत्रसूची न तु सम्पूर्णशास्त्रपरिज्ञाता । अथ सिद्धान्तहीननरस्यादेशः

सफलं यथार्थो न भवति । तथा च गुरुः । दैवज्ञैः शास्त्रतत्वज्ञैर्मुहूर्तोऽन्विष्यते यदि । सन्मुहूर्त्तः समन्वेष्यो नान्यैर्नक्षत्रसूचकैः । अत एव कश्यपो वेदपारगसाहित्येनैवनक्षत्रसूचकस्य श्राद्धभोजनमाह । "अरिविश्रम्भहन्ता च व्यङ्गो नक्षत्रसूचकः । काणःकुब्जश्चमन्दश्च स्वित्री मूर्खश्च कुष्ठवान् । सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥" तथा च वसिष्ठः । "त्रिस्कन्धपारंगम एव पूज्यः श्राद्धे सदा भूसुरवृन्दमध्ये ॥ नक्षत्रसूची खलु पापरूपो हेयः सदा सर्व सुधर्म्मकृत्ये ॥ अतो गणकानां यद्पांक्तेयत्वमभ्यधायि धर्म्मशास्त्रे तन्नक्षत्रसूचकाभिप्रायेण बोध्यम् । ज्योतिःशास्त्रस्यमहाप्रयोजनम् ब्रह्मसायुज्यमितिपूर्ववचनानुसारेण । पूर्वद्विजैरेवेतिव्याख्याने नान्यैः शूद्रादिभिरध्येतव्यमितिप्रतीयतेद्विजाःब्राह्मणक्षत्रियवैश्याः उक्तं च काशीखण्डे "ब्राह्मणात्क्षत्रियावैश्यास्त्रयोवर्णाद्विजाः स्मृताः । प्रथमं मातृतो जन्म द्वितीयंचोपनायनात् "यत्तुवशिष्ठवचनं "अध्येतव्यं ब्राह्मणैरेव तस्माज्ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम् । एतद्बुध्वा सम्यगाप्नोतिनूनं धर्म्मं चार्थं मोक्षमग्र्यंयशश्च ॥ इति श्रुतावपि ब्राह्मणेन निःकारणे धर्मःषडंगो वेदोऽध्येयो ज्ञेयश्च इति ब्राह्मणग्रहणमध्यापनेप्यावश्यकसूचनार्थम् । अत एव महाभारते । यजनं याजनं चैव तथा दानप्रतिग्रहौ । अध्यापनं चाध्ययनं षट् कर्म्मा ब्राह्मणः स्मृतः । इति क्षत्रियवैश्योस्त्वध्ययने एवाधिकारः वाध्यापते तदुक्तं मनुना "प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्ति च क्षत्रियस्य समादिशेत् ॥ पशूनां रक्षणं

दानमिज्याध्ययनमेव च। वाणिज्यं च कुसीदं च वैश्यस्य कृषिमेव च "इति। अत्र प्रजारक्षणाद्युक्तैर्नाध्यापनाधिकारः॥ ननु ज्योतिःशास्त्राध्ययनं किमन्यशास्त्रवद्विवादमात्रम्। उक्तं च "अन्यानि शास्त्राणि विनोदमात्रं न किंचि तेषां तु विशिष्टमस्ति। चिकित्सितं ज्योतिषमन्त्रवादः पदे पदे प्रत्ययमावहन्ति॥ प्रत्यये विश्वाससम्पादरूपम्। नन्वस्मिन्शास्त्रे के वा प्रत्यया इति चेच्छृणु। सूर्य्यचन्द्रयोर्ग्रहणं जगतीतले आबालवृद्धे महान् प्रत्ययः। उक्तं च। 'अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्। प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ॥ ११॥ अन्येपि प्रत्ययाः शृङ्गोन्नत्यादिदृश्यरूपाः। अथ प्रस्तुतमुच्यते॥ मुहूर्ततात्जिकग्रन्थद्वये जन्मलग्नादिप्रयोजनमस्त्येवातस्तद्वयं जातकस्कन्धान्तर्गतमेवेति यतो वासनां विनानक्षत्रसूचकत्वदोषापत्तिस्तेन सर्वैं फलादेशकर्तृभिरपिवासनाविचारो यतितव्य इत्यलं पल्लवितेन॥

तत्रादौ सर्वदेशप्रसिद्धत्वान्मुहूर्तचिन्तामणिनिष्ठसूत्रोपपत्तिः प्रारभ्यते॥

## ( प्र १ ) कुलिकः कालवेलाचेत्यादि (३७)॥

अत्रोपपत्तिः। अत्रजैमिनिसूत्राभिधग्रन्थटीकायां गुलिकादिधनार्थं वृद्धवाक्यानि। रविवारादिशन्यन्तं गुलिकादिनिरूप्यदिवसानष्टधा कृत्वा वारेशाद्गणयेत् क्रमात्॥ १॥ अष्टमांश निरीशः स्याच्छन्यंशो गुलिकः स्मृतः॥ रात्रिरप्यष्टधा भक्त्वा

वारेशात्पञ्चमादितः ॥ २ ॥ गणयेदष्टमः खण्डो निष्पत्तिः परिकीर्तितः ॥ शन्यंशो गुलिकः प्रोक्तो गुर्वंशो यमघन्टकः ॥ ३ ॥ भौमांशो मृत्युरादिष्टो रव्यंशः कालसंज्ञकः ॥ सोम्यांशोऽर्द्धप्रहरकः स्पष्टकर्म्मप्रदेशकः ॥ ४ ॥ रव्यादि सप्तसु वारेषु दिनमानमष्टधा विभज्य तत्रवारेशं प्रथमखण्डाधिपं कृत्वाऽग्रिमखण्डेषु तत्तद्वारेशादग्रिमग्रहात् क्रमेणेशत्वं जानीयादष्टमः खण्डस्तु निरीशः। एवं सप्तसु वारेषु शन्यंशो गुलिकनामा गुर्वंशो यमघण्टकः कुजांशो मृत्युनामाबुधांशोऽर्द्धप्रहरकः ॥ तथा च रविवारे सप्तमो गुलिकस्तृतीयो मृत्युनामा चतुर्थोऽर्धप्रहरकः पञ्चमो यमघन्टकः। सोमे षष्ठो द्वितीयस्तृतीयश्चतुर्थ इति गुलिकादिका बोध्याः ॥ कुजेपञ्चमप्रथमद्वितीयतृतीयविभागास्तेस्युः । बुधे चतुर्थसप्तमप्रथमद्वितीयविभागाः । गुरौतृतीयषष्ठसप्तमप्रथमविभागाः । शुक्रेद्वितीयपञ्चमषष्ठसप्तमविभागाः ॥ शनौ च प्रथमचतुर्थपञ्चमषष्ठविभागास्त इति ॥ अत्रेदमवधेयं गजांश इत्युक्त्वादर्द्धप्रहरमितं कुलिकादिमानं यत्तत्परार्द्धं तदर्द्धप्रहरार्धसमम्। दिनषोडशांशमित मुहूर्तमानं निषिद्धम्॥ तदुक्तंदैवज्ञमनोहरे "अहनि निशि गजांशाःस्वे दिनेशादिकानां भवति तु गुरुभौमज्ञार्किकालक्रमेण। प्रभवति यमघण्टः कन्टकः कालवेला कुलिक इति विरुद्धस्तत्परार्धं निषिद्धम् ॥ १ ॥ वसिष्ठोक्तदोषफलम् "निधनं प्रहरार्धे तु निःस्वत्वं यमघण्टके। कुलिकः सर्वनाशः स्याद्रात्रावेते न दोषदा॥ अर्द्धप्रहरार्धन्तुविवाहप्रकरणोक्तं बोध्यम्। कण्टककालवेलयोरन्वर्थत्वान्फलन्नोक्तम्। प्रकृते ग्रन्थकृत्वा गुलिका-

परपर्यायं कुलिकस्तथाऽर्धप्रहरापरपर्यायं कालवेला च मृत्यो-
रपरपर्यायं कण्टक इति कृतम् । तेन शनिबुधगुरुभौमानामेव-
सम्बन्धेनकुलिकादिनिरूपितम् । रविदिने सप्तमः कुलिकःपूर्व-
सिद्धस्तत्र मुहूर्त्तमानं कियन्मितमिति मीमांसायां सप्तमविभा-
गो द्विघ्नस्तदा शक्रमितमुहूर्त्ता यतो दिनमानाष्टमांशे मुहूर्त्तद्वय-
मस्ति दिनमानषोडशांशमुहूर्त्तविहितत्वात् । परमत्र ते शक्रमित-
मुहूर्त्ता रविवारान्मन्दं यावन्नगमितसंख्याभिर्द्विगुणाभिस्तुल्या
एवातउपपन्नंकुलिकानयनम् । एवं पूर्वसिद्धस्तृतीयविभागो
द्विघ्नस्तदारसमितमुहूर्त्ता रविवारात्कुजावधि त्रिमितसंख्या-
भिर्द्विगुणाभिस्समास्तेनोपपन्नं कण्टकानयनम् । चतुर्थभागो
द्विघ्नस्तदा नागमितमुहूर्त्ता रविवाराद्बुधपर्यन्तं वेदमिति-

संख्याभिर्द्विगुणाभिस्तुल्यास्तेनोपपन्नं कालबलानयनम् । यदि
पञ्चमभागो द्विघ्नस्तदादिग्मितमुहूर्त्ता रविवाराज्जीव यावद्बा-
णमितसंख्याभिर्द्विगुणिताभिःसमा अत उपपन्नं यमघंटानयनम् ।
एवं चन्द्रादिकरेष्वपि कुलिकादिकानयनवासना सुजनगणकै-
र्निजमत्या विभावनीया तेन वृद्धवाक्यानुसारकुलिकादिसाध-
नगौरवप्रक्रियां विहाय लाघवेन तदानयनं दिने एव कृतम् ।
रात्रावेते न दोषदा इत्यर्थवादो रत्नकोशे । "तमस्विनीगन्धमु-
पेत्य वारदोषास्तथा शक्तिमनाप्नुवन्तः । अन्धं समासाद्य वि-
लासिनीनां कटाक्षबाणा इव निष्फलास्युः ॥ तथा च ज्योति-
र्निबन्धे । "न वारदोषाः प्रवदन्ति रात्रौ देवेज्य दैत्येज्य दिवाक-
राणाम् । दिवा शशाङ्कार्कजभूसुतानां सर्वत्रनिन्द्यो बुधवारदोषः ।

## प्र० [१] सूर्ये षट्स्वरनागदिग्मनुमिता इत्यादि [३८]

अत्र युक्तिः । पूर्वश्लोकरीत्या रविवारात्कुजं यावदग्निमितसंख्या द्विगुणा तदा षट्संख्यो मुहूर्त्तः कण्टकः । एवं गुरु संख्या द्विगुणा तदा दशमो यमघण्टाख्यः । तथा मन्दसंख्या द्विगुणा तदा चतुर्दशसंख्या मुहूर्त्तः कुलिको दुष्टक्षणश्च विवाहप्रकरणोक्तं न "रवावर्यमेत्यादिना" ॥ एवं द्विगुणितबुध संख्यासमोऽष्टमः कालवेलाभिधस्तथार्द्धयामाख्यः । अथ विवाहप्रकरणोक्तेन "वारस्त्रिघ्नोष्टभिस्तष्टः सैकः स्यादित्यादिना "चतुर्थोऽर्धप्रहराख्यस्तेन सप्तममुहूर्त्तस्य तृतीययामार्द्धाच्चतुर्थार्द्धयामार्धं यावन्निष्ठत्वात्सप्तममुहूर्त्तोऽर्द्धयामाख्यः । एवं चन्द्रवारादिष्वपिबोध्यमत उपपन्नं सर्वम् ॥

## प्र० (१) शुक्ले पूर्वार्धेऽष्टमीति (४३)

अत्र युक्तिः । चतुर्दशी या शशिना प्रहीना तदर्धभागे शकुनिर्द्वितीये । दर्शार्धयोस्तच्चतुरङ्घ्रिनागौ किंस्तुघ्नमाद्ये प्रतिपद्दले च । अनेन वचनप्रमाणेन कृष्णभूतोत्तरार्धादारभ्य प्रतिपत्पूर्वार्धावधि शकुनितश्चत्वारि करणानि सन्त्येवं चांद्रमासस्य षष्ठिविभागात्मकं करणमानं तिथ्यर्धं कर्णमिति यावदनेन वचनप्रमाणेन प्रौढगणकस्वीकृतेन शुक्लप्रतिपदुत्तरार्धारभ्यैकैकतिथौ ववादित सप्तचलाख्यकरणद्वयनिवेशेन शुक्लचतुर्थीपरार्धे भद्रास्यात् । ततःपूर्ववत्स्थापनेन शुक्लाष्टमीपूर्वदले भद्राख्यं करणं स्यादेवमग्रेपि बोध्यमत उपपन्नं सर्वम् । एतेनेदमपि

सिद्धं यस्यांतिथौ करणं ज्ञातमभीष्टं सा तिथिःशुक्लप्रतिपदादितोयत्संख्याका सा द्विघ्नी तदा शकुनितो विष्टिपर्यन्तं करणसमूहं स्यात्परञ्च ववादिकलनार्थं रूपोना कार्या । अत्र करणानांभगणप्रयोजनाभावात्सप्ततष्टं करणं भवेत् । एतेन "एकेन हीना द्विगुणा तिथिश्च सत्यावशेषे करणं ववाद्यम्" । इत्युपपन्नं भवेत् । अथ करणनामानि । "ववाह्वयः बालवकौलवाख्ये ततो भवेत्तैतिलनामधेयम् । गराभिधानं वणिजञ्च विष्टिरित्याहुरार्याः करणानि सप्त ॥

## प्र० ( १ ) पादोनरेखेति ( ५४ )

कोपि पृच्छत्यहो गणक यस्मिन् समये स्वदेशे सूर्योदयो दृश्यते तस्मात्कालात्पूर्वपश्चाद्वा कतिमिताभिर्घटीभिर्लङ्कायांसूर्योदयोऽभूद्वा भविष्यतीतिप्रश्णोत्तरार्थमस्य सूत्रस्य प्रवृत्तिः । नाडीवृत्तधरातलगं भूबिम्बोपरि यद्वृत्तं मध्यभूपरिधि समाख्यं तन्निष्ठदेशाः निरक्षदेशाः । अत्र रावणराजधानीबिन्दुरेव लङ्का भूमध्याल्लङ्कादेशगतंसूत्रं नाडीवृत्ते यत्र लग्नं तत्र लङ्कादेशीयखमध्यम् । अत्र बिन्दौ गतं ध्रुवविलग्न यद्वृत्तं तल्लङ्कादेशीययाम्योत्तरवृत्तम् । लङ्कायाम्योत्तरवृत्तधरातलगतं भूबिम्बोपरियद्वृत्तं तद्रेखाभिधं तन्निष्ठदेशाश्चरेखादेशाः । स्वभूपृष्ठोपरिपूर्वापरानुरूपं यद्भूवेष्टनमर्थान्मेरुस्थकेन्द्राल्लम्बांशोत्पन्नवृत्तम् स्पष्टभूपरिधिसमाख्यमस्य तथा रेखाभिधवृत्तस्य च यत्र सम्पातस्तत्र स्वरेखादेशः कल्प्यः स्वस्वरेखादेशयोरक्षांशसम-

त्वात् । भूकेन्द्रात्स्वरेखादेशगं सूत्रं लङ्कायाम्योत्तरवृत्ते यत्र लग्नं तत्र स्वरेखादेशीयखमध्यम् । एवं भूगर्भात्स्वस्थानगं सूत्रं त्रिज्यागोलपृष्ठे यत्र लग्नं तत्र स्वखमध्यमस्य बिन्दोर्लग्नं ध्रुवात्मकं यद्वृत्तं तत्स्वयाम्योत्तरवृत्तमस्यनाडीवृत्तस्य च सम्पातरूप स्वनिरक्षदेशीयखमध्यमितिवेदितव्यम् । अथ स्वस्वनिरक्षदेशीयखमध्याभ्यां नवत्यंशैर्यैवृत्ते ते स्वस्वक्षितिजेभवतस्तथास्वनिरक्षक्षितिजंचोन्मण्डलम् । तयोरन्तरमहोरात्रवृत्ते चरमानम् । लङ्कास्वरेखाखमध्याभ्यां नवत्यंशैर्यैवृत्ते ते तत्कुजे भवतस्तयोरंतरालमहोरात्रवृत्तेचरमानं यत्तत्स्वदेशीयचरमानेनसमंस्यात्स्वस्वरेखादेशयोरक्षांशसमत्वात् लङ्कास्वनिरक्षदेशीयक्षितिजयोरन्तरंनाडीवृत्ते देशान्तरघटीसमं पृष्ठीयकेन्द्रान्तरस्य परमान्तरसमत्वात् । तथा सर्वेषु द्युज्यावृत्तेषु तत्कुजान्तरं देशान्तरसमं द्युज्यावृत्तानां ध्रुवप्रोतवृत्तान्तर्गतखण्डसमत्वात् । स्वस्वरेखादेशकुजयोरन्तरमपिपूर्वकथितदेशान्तरसमम् परञ्चसर्वस्मिन्नहोरात्रवृत्ते तयोरन्तरं समं कथंस्यात्कुजद्वयस्य ध्रुवप्रोतवृत्तभिन्नत्वात् । सत्यं तदुच्यते । स्वस्वरेखादेशीयपूर्वस्वस्तिकान्तरसमं देशान्तरं पूर्वसिद्धमतः स्वस्वरेखाक्षितिजयोरन्तरं नाडीवृत्ते देशान्तरसमं जातमेवं मेषान्ताहोरात्रवृत्ते स्वस्वरेखोन्मण्डलयोरन्तरं देशान्तरसमं सिद्धमेवातः स्वरेखातः प्राग्विभागे रेखादेशीयचरमानं देशान्तरघटीतो विशोध्यते तदा रेखाक्षितिजयोन्मण्डलयोरन्तरं स्यादस्मिन्पूर्वचरमेव योज्यते तदा स्वस्वरेखाक्षितिजयोरन्तरालं देशान्तरसममेवेति बोध्यम् ।

अथरेखातः प्राग्भागे परभागे वाऽहमस्मीत्यस्य तथा देशान्तरस्य च बोधः कथं स्यात् सत्यं तदुच्यते प्रथमं सिद्धान्तरीत्या लङ्कोदयकालिकौ चन्द्रार्कौवायातस्ततश्चरकर्मणा स्वरेखोदयकालिकौ कार्यावतः सिद्धान्तोक्तगणितेन चन्द्रस्पर्शकालो यन्मितेरेखादेशीयरात्रिगतकाले यस्यां पौर्णमास्यामायाति तन्मित एव गणितागतकालः तत्पौर्णमास्यां विलोक्यमाने तद्ग्रहणे यदि गणितागतकालादनन्तरमर्थाद्गणितोत्थकालादधिकस्वरात्रिगतकाले तद्ग्रहणं दृश्यं भवेत्तदा भूविभागे प्रागेव द्रष्टावर्त्तते। अत्र युक्तिः। लम्बनाभावात्खे स स्पर्शकालस्त्वेक एव किन्तु स्वस्वोन्नतकालमानं भिन्नं भिन्नं स्यादतः स्पर्शकालचिन्हात्पूर्वदिशि स्वस्वोन्नतकालान्तरे स्वस्वकुजं निवेश्यते तदा रेखाक्षितिजादग्रे स्वकुजं स्यादन्यथा कथं गणितकालाद्दृश्यकालमानमधिकं सङ्गच्छते। एवं यदा गणितकालात्पूर्वं तद्ग्रहणं दृष्टं भवेत्तदा भूविभागे पश्चाद्द्रष्टा वर्त्तते यतः पूर्ववत्स्पर्शबिन्दोः पूर्वदिशि स्वस्वोन्नतकालाग्रे स्वस्वकुजस्य निवेशने कृते रेखाक्षितिजात्पश्चिमे स्वकुजं स्यादन्यथा गणितकालादल्पो दृश्यकालः कथं भवेदेवं तयोर्गणितागतदृश्यकालयोरन्तरं देशान्तरघटीमानंततोऽनुपाताद्देशान्तरयोजनज्ञानं सुगममिति वेदितव्यम्॥ अथप्रकारान्तरेण तत्साधनं प्रतिपाद्यते। सिद्धान्तरीत्या गणितेन स्वरेखादेशीयमध्यान्हकालिकस्फुटार्कान्मध्यार्कं तथा स्वदेशीयमध्यान्हकालिकवेधजनितस्फुटार्कान्मध्यार्कञ्च कृत्वैकमेषतस्तयोरन्तरविकलामध्यमार्कगतिकलोद्धृता फलं देशान्तर-

घटीमान स्यात् । यतः स्वदेशीयमध्यान्हकालिकमध्यार्काद्रेखा-देशीयदिनार्धकालिकमध्यार्को देशान्तरघटीजनितगतिकलातुल्येनाधिकाल्पः पूर्वापरदेशवशात् । अथ प्रस्तुतमुच्यते स्वस्पष्ट-भूपरिधियोजनैः षट्त्रिंशच्छतानि पलानि लभ्यन्ते तदा देशान्तरयोजनैः कानीत्यत्र स्वल्पान्तरात्सर्वविषये "खाभ्राष्टवेदैः प्रमितैस्तुयोजनैर्भवेत्सदा भूपरिधिप्रमाणम् । ततो भवेदानयनं पलस्य देशान्तराद्योजनजानुपातादित्यादिनाऽष्टचत्वारिंशच्छतानि स्वदेशीयस्पष्टभूपरिधियोजनानि गृहीत्वा भाज्यहरौ द्वादशशतापवर्त्य जातम् ३ देयो = देयोप वा ( ४—१ ) देयो = देयो ४—देयो = देयो–देयो । रेखाप–रदेशे स्वोदयोन्मण्डलं लङ्काक्षितिजादूर्ध्वंदेशान्तरकाले वर्त्तते रेखापूर्वदेशे चाधस्तस्मात्पूर्व-देशान्तरपलैः स्वयाम्योत्तरोन्मण्डलान्तर्गतपञ्चदशघटिका-युतोनितास्तदा स्वयाम्योत्तरवृत्ताल्लङ्काक्षितिजं यावदहोरात्र-वृत्ते कालःस्यादत्र स्वयाम्योत्तरक्षितिजयोरन्तरमहोरात्र-वृत्ते स्वदिनार्धकालमानमतो देशान्तरपलसंस्कृतपञ्चदशघटि-कादिनार्धयोरन्तरं पूर्वदेशे चरदेशान्तरान्तरयोगसममुत्तरगोले दक्षिणगोले तु चरदेशान्तरान्तरसमं स्वलङ्काक्षितिजयोरन्तर-कालः स्यात्तदन्यथापरे । तत्र यदा दिनार्धाद्देशान्तरसंस्कृत पञ्चदशघटिका ऊना स्तदा स्वकुजाल्लङ्काकुजस्योपरिस्थित-त्वात्तैरेव कालैः स्वार्कोदयादनन्तरं लङ्कार्कोदयःस्यादन्यथा स्वक्षितिजाल्लङ्काकुजस्याधः स्थितत्वात्स्वार्कोदयात्पूर्वं लङ्कार्कोदयोऽभूत् । एवं गोलवशेन न यतः सौम्यगोले सदोर्ध्वं याम्य-

गोले यदा देशान्तरघटिकातश्चरमानमल्पं तदोर्ध्वमेव। यदि देशान्तराच्चरमधिकं तदाऽध एवात्र यदि चरदेशान्तरसमं तदायुगपद्देशद्वये सूर्योदयः पूर्वदेशे। परे तु स्वनत्या चिन्त्यम्। परं कतिमितदिगंशाग्रे स्वलङ्काक्षितिजसम्पातस्तत्कारणमग्रे वक्ष्यामः। अत्र यदैव लङ्कार्कोदयस्तदैव सर्वदेशे वारप्रवृत्तिः "प्रभाकरस्योद्गमनात्पुरे स्याद्वारप्रवृत्तिर्दशकन्धरस्य" इति वसिष्ठवचनादत उपपन्नं सर्वम् ॥

## अथैतत्सम्बन्धार्थमदुक्तप्रश्नः ।

याम्यसौम्ये स्वलङ्कापुरेऽर्कोदयः स्यात्समं यद्दिगुत्पन्नभागाग्रके। सद्बुधेन्द्र प्रचक्ष्वात्र तन्मे यदा गोलकन्दे लतावत्तता ते मतिः ॥ ४ ॥

## मदुक्त एवास्य भङ्गः ।

त्रिज्यागुणं स्वाक्षगुणं विभक्तं देशान्तरोत्पन्नभयाऽप्तचापम्। तत्कोटितुल्याः स्वदिगंशकाःस्युर्मदुक्तमित्थं गणकैर्विभाव्यम् ॥ ५ ॥

अत्र वासना। पूर्वापरदेशवशाद्याम्यसौम्यगोलयोः स्वपूर्वस्वस्तिकात्स्वलङ्काक्षितिजैक्यं यावत्कुजे दिगंशाख्यसमः कर्णः। नाडीवृत्ते स्वपूर्वस्वस्तिकाल्लङ्कापूर्वस्वस्तिकं यमकोटिखमध्याख्यं यावद्देशान्तरजांशसमो भुजः। लङ्कापूर्वस्वस्तिकात्कु-

जैक्यं यावत्तत्कुजे कोटिः। अत्र चापजात्ये स्वक्षितिजनाडी-वृत्तयोरुत्पन्नं कोणमानं लम्बांशसमं तत्कोटिज्यासमाऽन्त्यज्या मध्यजा दोर्ज्या त्रिज्यागुणा देशान्तर स्पर्शरेखया भक्तासमा दिगंशकोटिस्पर्शरेखा स्यादस्य युक्तिर्मदुक्तचापप्रपञ्चाख्यग्रन्थ-सूत्रे (३४) द्रष्टव्येति जातम् (अज्या × त्रि)/(दे स्प) =दिकोस्प, तद्ग्रन्थस्थस्पर्शरेखोक्तचापस्य कोटिभागा दिगंशाः स्युरत उपपन्नं सर्वम्॥

## प्र (१) वाराद्यैर्घटिका इति (५५)

अत्रोपपत्तिः। "वारप्रवृत्तेर्गदिता दिनेशात्कालस्य होरापतयः क्रमेण। सार्धेन नाडीद्वितयेन षष्ठः षष्ठश्च षष्ठश्च पुनः पुनः स्यादिति" वसिष्ठवचनप्रमाणेन यदि सार्धद्विघटीद्वयेनानेन (५)/(२) रूपमितकालहोरा लभ्यते तदेष्टवारप्रवृत्तिघटीभिः केति। फलं गतकालहोराशेषं वर्तमानकालहोरावयवरूपम्। यदि द्विघ्नेष्टघटिकारूपभाज्याच्छेषं विशोध्यते तदावशेषं हरलब्धि-घातसमम्। तच्च हरभक्तं फलंगतकालहोरैव स्यादिति न्यासः (२ इघ-शे)/(५) =गहो वारेशेष्टकालहोरेशान्तरानयनार्थमनुपातः। यद्येककालहोरयो वारेशकालहोरेशान्तरं शरमितं तदेष्टकालहोराभिराभिः (२ इघ-शे)/(५) किमिति। फलं (इघ-शे) रूपयुतं

दिनेशात्कालहोरेशावधि संख्या स्यात्परञ्च द्वित्र्यादिसंख्यकगतकालहोरायां वाराणां नगसंख्याकत्वात्पुनः परिवर्त्तनेन सा संख्या स्यादतो नगेस्तष्टेत्युपपन्नं सर्वम् ॥

## ( प्र ३ ) संक्रान्तिकालादित्यादि पद्यार्धमिति ( ५ )

अत्र वासना । यस्मिन् समये गणितेन रविबिम्बकेंद्रं राश्यादावायाति स एव कालो वस्तुतः संक्रान्तिकालः परं तस्य सूक्ष्मत्वेन स्नानदानानर्हत्वाद्राश्यादौ बिम्बप्राग्नेमिचलनकालात्पश्चिमनेमिचलनकालावधि यः कालः स स्थूलोप्यङ्गीकृतस्तत्साधनार्थमनुपातः । यदि स्पष्टगतिकलाभिः षष्टिसावनघटिकास्तदा स्पष्टरविबिम्बकलाभिः किमिति जातम् $\frac{(\text{६० × स्पबि})}{\text{स्पग}}$ अत्र गतिकलोपचयापचयसम्बन्धवशेन बिम्बकलोपचयापचयसंदर्शनात्सूर्यसिद्धान्तादिसिद्धान्तेष्वतः स्पष्टबिम्बकलासाधनार्थमनुपातः। यदि मध्यगत्या मध्यमबिम्बकला लभ्यत तदा स्पष्टगत्या किमिति जातम् $\frac{(\text{मबिं × स्पग})}{\text{मग}}$ = स्पबिं

अनेन पूर्वस्वरूपमुत्थाप्य जातम् ।

$\frac{(\text{६० मबिं × स्पग})}{\text{मग × स्पग}} = \frac{(\text{६० मबिं})}{\text{मग}}$ अत्र स्वल्पान्तरत्वान्मध्यमबिम्बं द्वात्रिंशन्मितं तथा मध्यगतिमानं षष्टिमितञ्च गृहीत्वेति जातं $\frac{(\text{६० × ३२})}{\text{६०}}$ = ( ३२ ) फलार्धसमाः षोडशघटिका राश्या-

दिगरविकेन्द्रात्पूर्वापरं बिम्बार्धचलनघटिकाः स्युरत उपपन्नं सर्वम् ॥

## ( प्र ३ ) तथाऽयनांशाः खरसेति ( ९ )

अत्रोपपत्तिः ॥ तिथिपत्रे यस्मिन्दिने रवेर्मेषतुलादि संक्रान्तिरस्ति तद्दिनात्पूर्वं परं वा कतिदिनाद्यवयवैः सायनार्कमेषतुलादिसंक्रान्तिरिति प्रश्नोत्तरार्थमस्य सूत्रस्य चरितार्थः । सृष्ट्यादौ नाडीक्रान्तिवृत्तयोर्यत्र सम्पातस्तस्मात्स्थिरमेषादेरधुना तयोः सम्पातावधि ये भागास्त एवायनांशाः परञ्चादौ सम्पातस्य चलनमस्ति किंवा नास्ति तथा वृत्तद्वयस्य चलनं किं वैकस्येति बोधः कथंस्यात्तदुच्यते । सिद्धान्तोक्तरचितगोलपृष्ठे यन्मितरात्रिगतकाले यन्नक्षत्रबिम्बं यत्र दृष्टं तन्नक्षत्रबिम्बोपरि गतकदम्बप्रोतक्रान्तिवृत्तयोरैक्यं नाडीक्रान्तिवृत्तयोः प्रथमसम्पाताद्विगणय्य ग्राह्यम् । पुनर्द्वितीयदिने यदि पूर्ववेधारम्भरात्रिगतकाले तन्नक्षत्रबिम्बोपरि गतकदम्बप्रोतभवृत्तयोरैक्यं मेषादेर्विगणय्य ग्राह्यम् । एवं यदि दिनद्वये तन्नक्षत्रस्थानीयराश्यादिकं समं तदा सम्पातचलनाभाव स्तदन्यथा चलनं नक्षत्रबिम्बस्य स्थिरत्वादित्यनुमानद्वयं कृतं भवत्येवं प्राचीनैर्वारं वारं परीक्षया तच्चलनं समानरूपेण दृष्टम् । अथैवं तन्नक्षत्रबिम्बसक्तध्रुवप्रोतविषुवद्वृत्तयोः सम्पातरूपस्थानं दिनद्वये यदागतंतयोरन्तरं यत्तत्प्रत्यहंसमानेनदृष्टमतो लाघवान्नाडीवृत्तस्य चलनाभावः किन्तु भवृतस्यैव चलनं स्वीकृतमर्थान्नाडीवृत्तैकबिन्दौ भवृत्तस्यानेकबिन्दवो यान्तीति वेदितव्यम् ।

अथ साम्प्रतमयनांशानयनं तथा सम्पातचलनं पूर्वाभिमुखं वा पश्चिमाभिमुखमस्तीति बोधः कथं भवेत्तदुच्यते। ग्रहरचनाकाले सर्वे ग्रहा मेषादावेव पुनर्भचक्रं क्रामन्तो यदा तद्बिन्दावर्थात्स्थिरं मेषादावायान्ति तदैव तदेकभगणपूर्त्तिः स्यादेवं कल्पभगणाः पठिताः सन्त्यतो गणितागतखेटः स्थिरमेषादेरायाति । अथ कथितवेधप्रकारेणाथवा 'यष्ट्या शङ्कुत्रितय मित्यादिसूत्रेण, श्रीमद्भास्करीययन्त्राध्यायनिष्ठेन यो वेधोपलब्धखेटः स चलन्मेषादेरेवायाति चलमेषादेः क्रान्त्यादीनां प्रवृत्तिदर्शनात् । तेन गणितागतवेधोपलब्धखेटयोरन्तरभागा अयनांशाः स्युः । परञ्च स्वं खेटद्वयमेकस्मिन्नेवबिन्दावस्त्यतो यदि वेधोपलब्धार्को गणितागतार्काद्धिकस्तदा भचक्रस्य पूर्वचलनमर्थात्स्थिरमेषादेः पृष्ठतः क्रान्तिनाडीवृत्तसम्पातस्तदन्यथा पराभिमुखं तच्चलनमिति बोध्यम् । अथ सम्पातः स्थिरमेषादेः सप्तविंशतिभागावधि गत्वा पुनः परावृत्या स्थिरमेषादेरासन्नं यातीति ज्ञानं कथं तदुच्यते । यथैवमधुना कस्मिंश्चिद्दिने अयनांशानां ज्ञानं कृत्वा ततोऽनन्तरं प्रत्यहं वेधोपलब्धायनभागानङ्कपत्रे विलिख्यैवं यस्मिन्दिने सप्तविंशतिमितायनभागा उपलब्धास्ततः परदिने यदि वेधेनायनभागा आनीयन्ते तदा सप्तविंशतिभागात्मका भवन्तीति प्राचीनैः परीक्षया वारं वारं दृष्टमिति बोध्यम् । अथ प्रकृतिमनुसरामः। यदि स्पष्टार्कगतिकलाभिरेकदिनं तदा षष्टिघ्नायनांशसमकलाभिः किमिति । लब्धदिनाद्यैः स्थिरमेषार्कसंक्रमणकालात्पूर्वं पश्चाद्वा चलसंक्रमणकालः । पूर्वमेव यदुक्तं

तत्साम्प्रतानुसारेण । परञ्चैवं यद्दिनादिफलं तत्स्थूलं स्यादत्र युक्तिश्चलमेषसंक्रान्तिकालिकः केवलस्फुटार्कः प्रत्यहं विलक्षण वेगेन स्थिरमेषसंक्रान्तिकालपर्यन्तमयनांशसमं चलत्यतोऽनुपातात्संक्रान्तिकालद्वयोत्पन्नं स्फुटार्कयोरन्तरसमायनांशकलाभिः कथमपि दिनादिफलं नायातीति । वास्तवदिनादिफलानयनमग्रे कथयिष्यामस्तेन व्यवहारार्थमाचार्योक्तं सर्वमुपपन्नम् ॥

## अथ वास्तवदिनाद्यानयनार्थं मदुक्तसूत्रम् ॥

संक्रान्तिकालद्वयजातसूर्यौ मध्यौ प्रसाध्यावथ तत्त्वरीत्या । तदन्तरोत्पन्नकलाविभक्तमध्यार्कगत्याऽऽप्तफलं दिनाद्यम् ॥ ६ ॥

अत्रोपपत्तिः-स्थिरमेषसंक्रान्तिकालिकः स्फुटार्कस्तु ज्ञात एवातस्तस्मात् "स्फुटं ग्रहं मध्यखगं प्रकल्प्येति" श्रीभास्करीयसूत्रेण मध्यार्कज्ञानं सुगमम् । एवं स्थिरसंक्रान्तिकालिकः स्फुटार्कस्त्वयनांशानयुतस्तदा स्थिरसंक्रमणकालात्पूर्वं परं चलसंक्रमणकालिकः स्फुटार्कः स्यादतः कथितप्रकारेण मध्यमार्कज्ञानं भवत्येव । तदन्तरकलामानभोगं चलमेषसंक्रमणकालात्स्थिरमेषसंक्रमणकालावधि मध्यार्कः समानवेगेन करोत्यतस्तदन्तरकलाभिरनुपातः कर्त्तुं युज्यते । तद्यथा । यदि मध्यार्कगत्यैकं दिनं तदा मध्यार्कान्तरकलाभिः किमिति । लब्धदि-

नैर्मध्यार्कस्तदन्तरकलामानं समानवेगेन क्रामति । स्फुटार्कस्तु विलक्षणवेगेन लब्धदिनैरेवायनांशान् क्रामत्यतः सर्वमुपपन्नम् ॥

## (प्र३) जघन्यभे संक्रमणे मुहूर्त्ता इति (११)

अत्रोपपत्तिः । पूर्वोक्तवेधप्रकारेणाश्विन्यादिनक्षत्रबिम्बानां कदम्बप्रोतसंसक्तभवृत्तीयध्रुवकानानीय द्वयोर्द्वयोरन्तरसमं स्वस्वभोगमानं स्यादेवं केषाञ्चिच्छशिगतिसमं तथा सार्धगतिसमं तथा गत्यर्धसमं यथा सिद्धान्तशिरोमण्युक्तं "अध्यर्धभोगानि षडत्र तज्ज्ञा इत्यादि" तत्राल्पभोगत्वादर्धभोगानां जघन्योभिधं "जघन्योन्त्ये अधमेपि चेत्यमरकोशविधानात्" अधमवाचकपदानां जघन्याभिधत्वाच्च । बृहद्भोगत्वादध्यर्धभोगानां बृहदाख्यम् । समभोगादेकभोगानां समाभिधं समुचितमेव । अथैषां घट्यात्मकमानार्थमनुपातः । यदि चन्द्रमध्यगत्या सावनषष्टिघटिकास्तदाऽर्धाध्यर्धसमभोगकलाभिः का इति । फलानि जघन्यादिभानां क्रमेण मानानि ३० । ६० । ६० अत्राचार्येण घटिकाद्वयं मुहूर्त्तमानमङ्गीकृत्य स्वस्वमानार्धानि स्वस्व नक्षत्रमुहूर्त्तमानानि १५।४५।३० कथितानीत्युपपन्नं सर्वम् ।

## ( प्र ४ ) षष्टिघ्नं गतभमिति ( १४ )

अत्रोपपत्तिः । फलकथनार्थमेकैकराशौ चन्द्रस्य प्रवासनाशौ मरणमित्यादि द्वादशाद्वादशावस्थाः सन्ति तत्र तद्बोधाय खषड्घ्नं भयातमित्यादिर्नीलकण्ठोक्तपद्येन भागादिचन्द्रस्वरूपम् ।

$$\frac{२}{९}\left[\text{गन } ६० + \left(\frac{\text{भया } ६०}{\text{भभो}}\right)\right]$$

अत्रानुपातः । त्रिंशदंशैरर्कमितावस्था लभ्यन्ते तदा भागादिचन्द्रसमांशैः किमिति कृते गुणघ्नगुणो हरघ्नहर इति न्यासः

$$\frac{२४}{२७०}\left[\text{ग } ६० \times \left(\frac{\text{भया} \times ६०}{\text{मभो}}\right)\right]$$ गुणहरौ रसेनापवर्त्य ।

जातं $$\frac{४}{४५}\left[\text{गन } ६० + \left(\frac{\text{भया} \times ६०}{\text{भभो}}\right)\right]$$ अत्र भभोगघटीभिः षष्टिघटिकास्तदाभयातघटिकाभिः किमिति त्रैराशिकेनाप्तषष्टिभभोगपरिणतभयातस्य भुक्तघटिसंज्ञा कृतैदर्थस्य वासनासिद्धत्वात्तथा पीयूषधाराकारस्वरसाच्च । द्वादशाधिकस्य प्रयोजनाभावादर्कशेषं इत्युक्तमतः सर्वमुपपन्नम् ॥

## ( प्र ३ ) स्पष्टार्कसंक्रान्तिविहीनचान्द्र- इति ( २० )



अत्र युक्तिः । यथा चैत्रशुक्लप्रतिपदादितो वैशाखकृष्णामान्तावधि स्फुटार्कमेषसंक्रान्तिस्तदा स्पष्टचैत्रमासः स्यादेवमग्रेपिबोध्यमर्थान्मेषादिसंक्रान्त्युपलक्षितचैत्रादिचान्द्रमासानां संज्ञा कृतैतदर्थस्यवासनासिद्धत्वात्तथा "मेषादिस्थे मैर्सवितरि यो यो मासः प्रपूर्यते चान्द्रः । चैत्राद्यः स विज्ञेया पूर्त्तिर्द्वित्वेऽधिमासोन्त्यः" इति ब्रह्मसिद्धान्तवचनाच्च । एवं यथा कल्प्यते वैशाखकृष्णामान्तात्यन्तासन्नपूर्व स्फुटार्कमेषसंक्रान्तिस्तदा स स्पष्टचैत्रचान्द्रमासस्तथा यदि ज्येष्ठकृष्णामान्तासन्नपरं स्पष्टरवेवृषसंक्रान्तिस्तदा चान्द्रमास लक्षणेन यः स्फुटवैशाखाख्यः स वृषसंक्रान्तिहीनः सन् स्फुटचैत्राख्य

एवातश्चैत्रमासद्वयसम्भवादन्त्योऽधिमासाख्यः । एवं मध्यार्कसंक्रान्तिविहीनचान्द्रमासो मध्याधिमास इत्यनुक्तमपिबोध्यम् । अत्र यस्मिंश्चान्द्रमासे स्फुटार्कसंक्रमणद्वयश्चेत्तदा संक्रान्तिद्वयोपलक्षितचान्द्रमास एक एव तेनास्मिन् लक्षणे क्षयमासः स्यात्परश्चैवं तदैव यदा चान्द्रमासान्तः पातिकुदिनेभ्यः स्फुटसौरमासान्तः पाति कुदिनसंख्या न्यूना स्यात् । अत्र स्फुटार्कवशेनास्य सम्भवश्चान्द्रमासकुदिनेभ्यः सर्वदा मध्यमसौरमासकुदिनसंख्याधिकत्वात् कदा कतिषु तत्सम्भवः स्यादित्यादि सर्वं सिद्धान्तशिरोमण्युक्तवासनया बोध्यं ग्रन्थगौरवभयेन मया नोक्तमित्युपपन्नं सर्वम् ॥

## ( प्र ६ ) निघ्ना भभोगेन खतर्कभाजिता इति ( ४६ )

यदि षष्टिदण्डात्मकभभोगेन वेदप्रमितविषनाडिका इमे ध्रुवाङ्काश्च लभ्यन्ते तदेष्टभभोगेन किमित्यनुपातेन वासना सुगमैवेति ।

## ( प्र ६ ) वारस्त्रिघ्नोऽष्टभिरिति ( ६२ )

अत्रोपपत्तिः । तत्र श्रीपतिवचनम् "मनीषिणोर्द्धप्रहराद्द्वितीयादारभ्य सर्वेष्वपि मङ्गलेषु ॥ भौमे शनिः सूर्यबुधार्किचन्द्रसुरेज्यवारेषु विवर्जनीयाः ॥" अस्माद्वृद्धवाक्यप्रमाणात्प्रथमार्धप्रहरः कस्मिंश्चिद्दिने वर्ज्यो नास्ति द्वितीयार्धप्रहरमारभ्य तृतीयतृतीयार्धप्रहरो रव्यादिदिनेषु निन्द्यो भवत्यतस्त्रिगुणित-

वारो द्वितीयार्धप्रहरवर्ज्यार्धप्रहराभ्यन्तरे संख्या स्यात् । प्रथमार्धयामात्कलनाय सा संख्या सैका कर्त्तव्या । तस्या नागाधिकत्वे नागैस्तष्टेत्युपपन्नं सर्वम् ॥

## ( प्र ६ ) मेषादिगेऽर्केष्टशरा इति ( १०० )

अत्रोपपत्तिः । मेषादिद्वादशराशिषु रविसंक्रमणेषु नागाद्रिभागाध्वनिकमन्दोच्चात्सिद्धान्तरीत्या गतीनां साधन कृत्वा व्यवहारार्थं स्वल्पान्तरत्वात्तन्मासपर्यन्तमेकरूपा वक्ष्यमाणरविसाधनार्थं पठिताः । तत्प्रतीत्यर्थमुदाहरणम् । मेषादौ रवि ०।०।०।०। अनेनोनं मन्दोच्चं यथा स्थितमेवेति केन्द्रस्यरूपं २।१८।०।०। तत्कोटिस्वरूपं ०।१२।०।० लघुज्यापक्षे द्विघ्नचापं ज्यास्यादिति कोटिज्यास्वरूपम् २४ ] "तत्कोटिजीवाकृतबाणभक्तेत्यादिना" भास्करीयपद्येन पूर्वसाधितकोटिज्येयं ( २४ ) कृतबाणभक्ता फलं शून्यं शेषमिदं $\frac{२४}{५४}$ षष्ठ्या सङ्गुण्य हरेण विभज्य फलं २७मृगादिकेन्द्रत्वाद्गतिफलमिदं ०।२७ मध्यगतिकलातः (५९।८) संशोध्य शेषं ५८।४१ स्पष्टगतिः स्यात् । एवं वृषसंक्रान्तिकालिकार्कादस्मात् १।०।०।० । स्पष्टगतिः ५७।३५ एवमन्येष्वपि बोध्यं, परमाचार्येणावयवग्रहणं न कृतमित्युपपन्नं सर्वम् ॥

## ( प्र ६ ) संक्रान्तियातघस्राद्यैरिति (१०१)

अत्र युक्तिः । यदि दिनैकेन गतिकला तदा संक्रमणकालेष्टकालयोरन्तरदिनावयवैः किमित । लब्धकलात्मकं षष्ठ्यासङ्गुण्य भागात्मकं स्यादनेन संक्रान्तिकालिकार्को युतस्तदेष्टकालिकः स्यादित्युपपन्नं यथोक्तम् ॥

## ( प्र ६ ) तनोरिष्टांशकादिति ( १०२ )

अनेन लग्ननवांशज्ञाने लग्नषड्वर्गसाधनमुच्यते। तद्यथा। नवप्रमितनवांशैस्त्रिशदंशास्तदा वर्त्तमाननवांशपूर्वनवांशसंख्यया किमिति। फलं ( ३० × इन )=( १० × इन ) लग्नस्य गतनवमांशजभागादिकमस्मात्पूर्वरीत्याषड्वर्गज्ञानं स्पष्टमेवेत्युपपन्नं यथोक्तम् ॥



## ( प्र ६ ) अर्काल्लग्नात्सायनादिति ( १०३ )

अत्रोपपत्तिः। अनेन लग्नार्कज्ञाने स्वेष्टघटीज्ञानमुच्यते। तद्यथा। तात्कालिकार्कोपरि गताहोरात्रवृत्ते रविक्षितिजयोरन्तरालं सावनेष्टघटीमानम्। एवमौदयिकार्कात्तदीयाहोरात्रवृत्ते क्षितिजावधि नाक्षत्रेष्टघटीमानम्। अथ स्वस्वरवेः क्रान्तिक्षितिजवृत्तसम्पातावधि स्वस्वभोगान्तरालोदयलग्नभुक्तभवपलानामैक्यं स्वस्वेष्टघटीपलमानं स्यात्तत्र भोगभुक्तपलार्थमनुपातः। खाग्निभागैः स्वस्वोदयपलमानं तदा भोगभुक्तभागैः किमिति। फलं मध्योदययुतं तदेष्टमानं पलात्मकं तद्घटीकरणार्थं षष्टिगुणमित्युपपन्नं सर्वम् ॥

## ( प्र ६ ) चेल्लग्नार्कौ सायनाविति ( १०४ )

अत्रोपपत्तिः। यदि लग्नार्कावेकराशौ तदा पूर्वयुक्त्या तयोरन्तरभागा इष्टघटीपलमानेनोद्गच्छन्ति तेन तदन्तरांशभवपलं स्वेष्टघटीपलं स्यात्तदर्थमनुपातः। खाग्निभागैस्त्रिशदंशास्तदा तदन्तरांशैः किमिति। फलं स्वेष्टघटीपलं स्यात्परं यदा लग्ना-

दर्को न्यूनस्तदाऽर्कस्य कुजोर्ध्वस्थितत्वाद्दिनगतकालस्तदन्यथा कुजादर्कस्याधः स्थितत्वाद्रात्रिशेषकालः स्यादिति वेदितव्यम् । चेन्निशायां लग्नं ज्ञातुमभीष्टं तदा क्रियालाघवादर्कः सषड्भः क्रियते तर्हि यावद्रात्रिगतकालेनास्तक्षितिजादधः केवलार्कस्तावतान्तरेणोदयक्षितिजादूर्ध्वं सषड्भार्कः स्यादतो रात्रिगतकालेन सषड्भार्काल्लग्नानयनं वक्ष्यमाणप्रकारेण सुगमम् । परञ्च सषड्भार्काल्लग्नानयने नित्यविभिन्नः स्यात् । किन्तु सूर्योदयादिष्टघटीग्रहणेन केवलार्कादपि लग्नानयनं भवत्येवमन्यद्विशेषं सिद्धान्तोक्तवद्बोध्यमित्युपपन्नं सर्वम् ॥

## ( प्र १२ ) एकोनितेष्टर्क्षहता इति ( ३ )

अत्रोपपत्तिः । अष्टाहते क्षेत्रफले विभक्ते भसंख्यया शेषमेवेहि धिष्ण्यमिति श्रीपतिपद्यागमप्रमाणेन क्षेत्रफलापरपर्यायकल्पितपिंडप्रमाणेऽस्मिन् [ या ] अष्टगुणिते सप्तविंशतिभक्ते लब्धिप्रमाणं कालकं प्रकल्प्य हरलब्धिघातोनभाज्यराशिः शेषसम इति पक्षौ या ८–का २७ = इन पक्षद्वये समसंयोज्याष्टभक्ते इति जाता यावत्तावदुन्मितिः $\text{या} = \frac{\text{इन} + \text{का } २७}{८}$ अथ प्रकारान्तरेण यावत्तावदुन्मित्यानयनं । तद्यथा । पिण्डइहाष्टशेषित इत्याचार्योक्तपद्यागमप्रमाणेन पिण्डेऽष्टभक्ते शेषमायो भवतीति लब्धिप्रमाणं नीलकं प्रकल्प्योक्तवज्जातौ या–नी ८ = इआ ततः समयोजनाल्लब्धंयावतावदुन्मित्याऽनया या=इआ+नी ८ पूर्वया-

वत्तावदुन्मितिः समेति जातौ पक्षौ का $\frac{२७+इन}{८}$ = नी ८ + इआ

समच्छेदसमशोधनाभ्यां जाता कालकोन्मिति $\frac{नी६४+इआ८-इन}{२७}$

अत्र चतुःषष्टिमितं भाज्यं सप्तविंशतिमितं हारं प्रकल्प्य रूपक्षेपे वल्ली ततो लब्धि-

| | | |
|---|---|---|
| वल्ली | २<br>२ | ततो लब्धि- |
| गुणौ १६ । ८ स्वतक्षणाच्छुद्धौ जातावृ- | १<br>२<br>१ | णरूपक्षेपे |
| ४५ । १६ अत्राभीप्सित | ० | क्षेपवि- |

शुद्धिनिघ्ने स्वहारतष्टे इति कर्त्तव्येऽभीष्टक्षेपखण्डयोर्धनर्णवशेनाद्यखण्डगुणने रूपक्षेपजलब्धिगुणावन्यखण्डगुणने रूपशुद्धिभवलब्धिगुणौ संप्रधार्य्य तथा कृते जातावभीष्टक्षेपे इआ + ८ − इन लब्धिगुणौ कालकनीलकमाने "अन्त्योन्मितौ कुट्टविधेर्गुणाप्ती ते भाज्यतद्भाजकवर्णमाने" इति भास्करीयबीजगणितपद्येन । ( इआ २४ + इन ४५ = का १ ) आभ्यां पूर्वसाधितया— ( इआ १० + इन १६ = नी १ ) यत्तावन्मानद्वये कालकनीलकावुत्थाप्य स्वच्छेदेन विभज्य लब्धं यावत्तावन्मानम् । इआ ८१ + इन १५२ । अत्र रूपयुतोनेष्टायनक्षत्रे केवलेष्टायनक्षत्रसमे तेन जातं ८१ (इआ + रू १— रू १ + १५२ (इन + रू १— रू १ पृथक्गुणकेन सङ्गुण्य गुणघ्नधनात्मकरूपयोगाज्जातम् । इआ ८१ - रू ८१ + ( इन १५२— रू १५२ ) + रू २३३ वा=८१ ( इआ — रू १ ) + १५२ ( इन— रू ) + रू २३३ । अत्र

भूपाश्विभिः २७ × ८ = २१६ तष्टपिण्डे हरलब्धिघातोनभाज्यसमेऽस्मिन् (पि – ल × २७ × ८) अष्टभक्ते द्वितीयखण्डं निःशेषं स्यात्तेन वास्तवपिण्डजायसमो भूपाश्वितष्टपिण्डजायो भवत्येवं भूपाश्वितष्टपिण्डे (पिं—ल × २७ × ८) अष्टगुणसप्तविंशतिहृतेऽत्रापि द्वितीयखण्डे निरग्रफलत्वात्केवलपिण्डजनक्षत्रं भूपाश्वितष्टपिण्डभवेन समं स्यात्तेन पिण्डस्य लघुत्वकरणार्थमाप्तपिण्डेऽन्त्याङ्कभूपाश्विभिर्विभज्य शेषम् ८१ ( इआ—रू १ ) + १५२ ( इन रू १ ) + १७ पुनस्तच्छेषं भूपाश्विभिस्तष्टम् । बहुधा लब्धमहामहोपाध्यायपद्वीकेन श्रीमद्गुरुणा सुधाकराचार्येण रचितपिण्डप्रभाकराभिधग्रन्थे विशेषं विलोक्यमत्रोपपन्नं सर्वम् ॥

## स्वेष्टायनक्षत्रभव इति ( ४ )

अत्रोपपत्तिः । विस्तृतिदीर्घघातसमं क्षेत्रफलं पिण्डाख्यं तेन विस्तृतिभक्तपिण्डं दैर्घ्यमानं तथा दैर्घ्यहृत्पिण्डमानं विस्तृतिसमं स्यादिति वासना सुगमैव ॥

## दिक्षु पूर्वादित इति [ ८ ]

अत्रोपपत्तिः । तत्रादावुद्दिष्टाङ्कप्रस्तारक्रम उच्यते । यथोक्तं वृत्तरत्नाकरे वर्णप्रस्तारे "पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम् । १ । ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् । प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः । २ । अत्र यन्मितप्रस्तारोऽभिमतस्तन्मि-

तोद्दिष्टाङ्कः । अत्रार्थतः सिद्धाः प्रथमालावुद्दिष्टाङ्कसंख्यकाः सर्वे गुरवस्ततो द्वितीयालौ प्रथमालिस्थितगुरूणामाद्यगुरोरधोल-घु दत्वा परत ऊर्ध्वालिवत्स्थापनीयाः । एवं तृतीयादिपङ्क्तौ पश्चात्स्थानस्य शून्यत्वादूने गुरुमेवं पूर्ववन्न्यासेन यावत्सर्वल-घवो भवेयुस्तावल्लेख्या इति कृते सत्यभीष्टाङ्कास्यप्रस्तारो भवति । गुरुलघुस्वरूपं वृत्तरत्नाकरे "असौ वक्रो गुरुर्ज्ञेयोह्यन्यो वै मातृको ऋजु रिति" असौ गुरुर्वक्राकारो [ ऽ ] लेख्यः । अन्यो गुर्वतिरिक्तो लघुमातृक एकमातृक ऋजुरूर्ध्वाधराकारो [ । ] लेख्यः । प्रकृते गृहदिशाश्चतुष्टयवशाच्चत्वार एवोद्दिष्टाङ्काः सन्त्यतः प्रथमालिमध्ये चत्वारो गुरवस्ततो द्वितीयभेदौ लघूं न्यस्येत्यादिना । अथवा "एकाद्येकोत्तरा अङ्का व्यस्ताभाज्याः क्रमस्थितैरिति" पाटीगणितपद्येन षोडशगृहभेदाः पूर्वादि द्वारवशेन सिद्ध्यन्ति तद्ध्रुवादीनि गृहनामानि ग्रन्थकृता स्वी-कृतानि । तत्र वेदप्रमितगुरुभिः पूर्वदक्षिणपश्चिमोत्तरदिशा ज्ञेया यत्र यत्र लघुस्तस्यान्दिशि तावत्संख्यकानि गृहद्वाराणि भव-न्त्यर्थादेक लघुव्यक्तिर्भेदचतुष्टये वर्त्तते । तेनाद्यभेदे पूर्वद्वारकम् । द्वितीयभेदे दक्षिणद्वारकम् । तृतीयभेदे पश्चिमद्वारकम् । चतुर्थ-भेदे सौम्यद्वारकम् । एवं द्वित्र्यादिलघुव्यक्तिर्यावद्भेदेषु तत्राद्य-भेदादारभ्य तद्भेदं यावत्पूर्वादिदिग्गणनया द्वित्र्यादिद्वारकं गृह-मिति वेदितव्यम् । तत्राद्यालौ लघोरभावादूर्ध्वमुखं गृहं स्यात् । एतत्प्रस्तारमन्तरेण ग्रन्थकृता ध्रुवादिगृहानयनं कृतम् । तद्यथा । प्रथमभेदे लघोरभावादालयदिग्द्वारगणना न भवेत्तेन द्वितीयभे-

देगणनया प्रथमद्वितीयचतुर्थाष्टमगृहभेदेषु क्रमेण पूर्वदक्षिणपश्चिमोत्तरद्वारकाः तत्रैकद्वारे प्रेप्सित पूर्वदिशि शालाध्रुवाङ्क एकः । दक्षिणदिशि द्वौ । पश्चिमदिशि कृत समः । उत्तरदिशि गजमितः । द्वित्र्यादिद्वारेषु प्रेप्सितेषु यद्दिक्षु द्वारेच्छातद्दिग्ध्रुवयोगेन शालाध्रुवाङ्क स्यात् । यथा पूर्वयाम्यद्वारे प्रेप्सितध्रुवयोर्भूयमितयोर्योगः (१ + २)=[३] पूर्वदक्षिणद्वारकं द्विलघुस्थानवशेन गृहं प्रस्तारलिखितक्रमेण प्रत्यक्षमुपलभ्यते सर्वत्रैवम् । पश्चाद्यप्रस्तारमारभ्य ध्रुवादि नामानि गृहाणि सन्त्यत आचार्येण तदा रभ्य गृहकलनार्थं योगः सैकः कृतः । अथ प्रस्तारचक्रम् ॥

| | | | | | |
|---|---|---|---|---|---|
| उर्ध्व | SSSS | ध्रु | द० उ | SISI | रि |
| पू० मु | ISSS | धा | पू० द | IISI | वित्त |
| द० मु | SISS | ज | उ | | |
| पू० द | IISS | न० | प० उ | SSII | क्ष |
| प० | SSIS | ख | पू० प | ISII | आ |
| पु० प | ISIS | का | द० उ | | |
| द० प | SIIS | म | द० प | SIII | विपु |
| पू० द | IIIS | सु | उ | | |
| प० | | | पू० द | IIII | विज |
| उ० | SSSI | दु | प० उ | | |
| पू० उ | ISSI | उ | | | |

अत्रेदमवधेयम् । प्रथमभेदे ध्रुवाख्यमूर्ध्वमुखं गृहम् । द्वितीये

पूर्वद्वारं धान्याख्यं गृहम् । तृतीये दक्षिणद्वारं जयाख्यम् । चतुर्थे प्रागुद्दक्षिणद्वारंनन्दाख्यम् । पञ्चमे पश्चिमद्वारं खराभिधम् । षष्ठभेदे पूर्वपश्चिमद्वारं कान्ताख्यम् । सप्तमे दक्षिणपश्चिमद्वारं मनोरमम् । अष्टमे पूर्वदक्षिणपश्चिमद्वारं सुमुखम् । नवमे सौम्यद्वारं दुर्मुखाख्यम् । दशमे पूर्वोत्तरद्वारमुग्राख्यम् । एकादशे याम्यसौम्यद्वारं रिपुदम् । द्वादशे पूर्वदक्षिणोत्तरद्वारं धनदाख्यम् । त्रयोदशभेदे पश्चिमोत्तरद्वारं नाशाख्यम् । चतुर्दशभेदे पूर्वपश्चिमसौम्यद्वारमाक्रन्दम् । पञ्चदशभेदे याम्यपश्चिमसौम्यद्वारं विपुलम् । षोडशभेदे पूर्वदक्षिणपश्चिमोत्तरद्वारं विजयाख्यमितः सर्वन्निरवद्यम् ।



## तिथ्यर्काष्टाष्टिगोरुद्रेत्यादि ( ६ )

अत्र युक्तिः । अत्रैषां ( २+४+८ ) शालाध्रुवाङ्कानां योगः शक्रमितः [ १४ ] सैकस्तदा पञ्चदशभेदो जातः [ १५ ] तत्र विपुलाख्यं गृहं तेन नामाक्षरं त्रयं युक्तमेव । एवमेषां (१+२+८) योगः ( ११ ) सैकस्तदाऽर्कमितोजातः । [ १२ ] तथैषां ( १+२+४+८ ) योगः [ १५ ] सैकस्तदाष्टिमितोजातः [ १६ ] एवं केवलं गजमितः सैकस्तदाऽङ्कमितः [९] एवमनयो [२+८] योगः सैकस्तदा रुद्रमितः [ ११ ] एवमेतेषां (१ + ४ + ८) योगः सैकस्तदा शक्रमितः [ १४ ] । एवं सिद्धे तत्र तत्र भेदे प्रस्तारचक्रावलोकनान्नामाक्षरं त्रयं गृहमस्ति तेनोपपन्नं पूर्वार्द्धम् । अथ परार्द्धोपपत्तिः । अथोर्ध्वमुखे शालाध्रुवाङ्के खमितः सैक-

स्तदा भूमितो जातः ( १ ) एवं पूर्वमुखे ध्रुवाङ्का रूपमितः सैकस्तदा द्विमितः ( २ ) । एवमनयोः [ १+२ ] योगः सैकस्तदा वेदमितः (४) । तथा केवलं वेदमितो ध्रुवाङ्कः सैकस्तदा शरमितः ( ५ ) । एवमनयोः [१+४] योगः सैकस्तदा रसमितः ( ६ ) । तथानयोः ( १+८ ) योगः सैकस्तदा दिग्मितः (१०) तथा केवलं यममितध्रुवाङ्कः सैकस्तदा राममितः ( ३ ) । एवमनयोः ( ४+८ ) योगः सैकस्तदा विश्वमितः ( १३ ) । अत्र साधित तत्र तत्र भेदे नामाक्षरं द्वयमस्ति । एवमनयाः (२+४) योगः सैकस्तदा नगमितः ( ७ ) परमत्र मनोरमाख्यं चतुरक्षरं गृहमस्ति तेनोपपन्नं सर्वम् ।

श्रीकृष्णदत्तेन कृता सुरम्या मुहूर्त्तचिन्तामणिपद्यजाता ॥
सुवासना पूर्तिमगान्विताम्तं दुर्दर्पवृन्दप्रहरा खलानाम् ॥

**अथो बृहज्जातकपद्यजातां परोपपत्तिं विमलां सुबोधाम् । श्रीकृष्णदत्तो बबुएतनूजस्तनोति सद्बुद्धिविवृद्धि सिद्ध्यै ॥**

**[अ] पूर्वादूर्ध्वं विषयादयः कृतगुणा इत्यादि [१६]**

अत्रोपपत्तिः । अथ "निरक्षदेशात्क्षितिषोडशांशे भवेदवन्ती गणितेन यस्मादित्यादिना" सिद्धान्तशिरोमणेर्गोलाध्यायनिष्ठपद्येनावन्तीपुरे पलांशाः सार्द्धद्वाविंशतिभागाः २२।३० । तदूनखाङ्कसमास्तत्रत्या लम्बांशाः सार्द्धसप्तषष्ठिभागाः । ६७।३० लघुज्यापक्षे पलांशज्या रसवेदमिता ( ४६ ) लम्बज्या पञ्चाधि-

कशतसमा ( १०५ ) अत्रानुपतनादक्षज्या द्वादशगुणिता लम्बज्याभक्ता फलं सपादपञ्चमिता ५ । १५ पलभा स्यात् । अत्र "दिङ्नागसत्र्यंशगुणैर्विनिघ्नीत्यादिना" सिद्धान्तशिरोमणेर्ग्रहगणिताध्यायस्पष्टाधिकारनिष्ठपद्येन पलात्मकं चरमानं ( ५२ । ४२ । १७ ) एतैरूनयुताः क्रमगोत्क्रमस्था लङ्कोदया विघटिकास्तदा तत्रत्योदयपलानि भवन्तीति स्वरूपम् । २२६ । २५७ । ३०६ । ३४० । ३४१ । ३३० । अत्र भट्टोत्पलटीकाकारविहितानि यान्युदयपलमानानि चत्वारिंशत्पलोत्तरोत्तराधिकानि द्विशतपलानि । २०० । २४० । २८० । ३२० । ३६० । ४०० । तान्युज्जयनीपुरे न समीचीनानि यतस्तदुक्तोदयपलानि पादोनाष्टविषुवतीविषयासन्ने मेषादीनां स्वल्पान्तरत्वाद्घटन्ते तानि चाचार्येण फलोपयोगित्वात्पठितानि । यथा प्रत्यक्षतो वेधेन गणितेन च ग्रहाणामुच्चानि चलानि तथापि फलोपयोगित्वात् "अजवृषमृगाङ्गनेत्यादिना" स्थिराण्येव पठितानीति वेदितव्यम् ।

## [ श्र २ ] अयनक्षणवासरर्त्तवो मासार्द्धश्च समाश्च भास्करादिति ( १४ )

अत्र युक्तिः । लग्ने योनवांशकस्तस्मान्नवांशकाद्यावत्संख्येषु नवांशकेषु खेटा भवन्ति तावत्संख्या रव्यादिग्रहोपलक्षिता अयनादिका बोध्याः । अत्रेदमवधेयम् । लग्ननवांशाद्रविनवांशसंख्या द्विभक्ता शेषं क्रमेण सौम्ययाम्यायनम् । एवं चन्द्रनवांशसंख्या पञ्चदशभक्ता शेषं क्रमेणैकद्वित्र्यादिमुहू-

र्दप्रमाणम् । तथा कुजनवांशसंख्या सप्तभक्ता शेषं क्रमेण रव्यादिदिनप्रमाणम् । एवं बुधनवांशसंख्याप्रमाणं रसतष्टं ऋतुः स्यात् । एवं गुरुनवांशसंख्याप्रमाणं द्वादशतष्टं क्रमेण चैत्रादिमासः । एवं शुक्रनवांशसंख्याप्रमाणं द्वितष्टं क्रमेण शुक्लादिकः पक्षः । एवं शनिनवांशसंख्या प्रमाणसममेकद्वित्र्यादिवर्षप्रमाणं यतो नवांशसंख्याप्रमाणं कथमप्यष्टोत्तरशताधिकं न स्यादिति बोध्यमतः सर्वन्निरवद्यम् ॥

## अ [ २ ] शत्रूमन्दसितौ समश्चेति [ १६ ]

अत्र युक्तिः । "सत्योक्ते सुहृदस्त्रिकोणभवनादित्यादिना" भदन्तोक्तागमप्रमाणेन स्वमूलत्रिकोणाद्ये खेटाः स्वोच्चायुःसुखपाः स्वान्त्यधीधर्मपास्ते सुहृदः स्युः । अत्रापि 'द्व्येकानुक्तभपान्सुहृत्समरिपून्संचिन्त्यनैसर्गिकानित्यादिना" पूर्वोक्तस्थानेषु यो ग्रहे द्विस्थानाधिपः स सुहृत्तथैकस्थानाधिपः समः । यदि कस्यापि स्थानस्य पतिर्नस्यात्तदा रिपुः । तथा रविचन्द्रावेकराश्याधिपत्वेन मित्रे भवतः । अत्रेदमवधेयम् "सिंहो वृषः प्रथमषष्ठहयाङ्गतौलिकुम्भास्त्रिकोणभवनानि भवन्ति सूर्यादित्यादिना" रवेर्मूलत्रिकोणः सिंहराशिस्तस्मात्पञ्चमराशिः कार्मुकाख्यः । अष्टमराशिर्मीनाख्यः । तयोरधिपतिर्जीवः । एवं सिंहराशेश्चतुर्थनवमोच्चाधिपः कुजः । तथा सिंहराशेर्द्वादशस्थानाधिपश्चन्द्रः । तेन रवेर्गुरुकुजशशिनो मित्राणि स्युः । एवं सिंहराशेर्द्वितोयभवनाधिपो बुधस्तेन रवेर्बुधः समः । एवं

तद्राशेरुक्तभवनाधिपौ मन्दसितौ नस्तस्तेनतौ रवेः शत्रू भवतः । एवमन्यग्रहाणामपि निजमत्या विभावनीयमतः सर्वन्निरवद्यम् ॥

## अ (४) तत्कालमिन्दुसहितो द्विरसांशकेः यस्तत्तुल्यराशिसहित इत्यादि (२१) ॥

अत्र युक्तिः । तत्र तावदर्थो व्याख्यायते । तत्काले गर्भाधानकाले प्रश्नकाले वा यत्र राशौ चन्द्रमा व्यवस्थितः। तत्र यावत्संख्यके द्वादशांशे वर्त्तते । तस्माद्द्वादशांशराशेरग्रे तावद्द्वादशांशसंख्यको यो राशिस्तत्रस्थे चण्डीशचूडामणौ पुरतः सम्भवे मासि प्रसवो वाच्यः । यस्माद्भगवान् गार्गिः "यावत्संख्ये द्वादशांशे शीतरश्मिर्व्यवस्थितः । तत्संख्याको यो राशिर्जन्मेन्दुस्तद्गतां वदेत् ॥ यावानुदेति । आधानकाले प्रश्नकाले वा यल्लग्नं तस्य यः समानभागो दिनबली रात्रिबली वा यावानुदेति स्वमानाद्यावत्कालभोगो गतस्तावत्येव दिननिशोः स्वमानाद्गते काले जन्म भविष्यतीति बोध्यम् । तथा चोक्तं सारावल्याम् "तत्कालं दिवसनिशासंज्ञः समुदेति राशिभागो यः । यावानुदयस्तावान्वाच्या दिवसस्य रात्रेर्वा ॥

अस्योदाहरणम् । यथा माघशुक्लपञ्चम्यां रात्रिगतघटिकाद्यम् (१० । २३) एतत्समये निषेकः । तात्कालिकश्चन्द्रः ११ । १४ । १७ । ३२ । अस्य द्वादशांशः षष्ठः स च सिंहाख्यः । अस्मात्षष्ठो मकरराशिः । अत्र वर्त्तमाने चन्द्रे दशमे मासि मार्गाख्ये जन्मवदेत् ।

अथ नक्षत्रानयनमुच्यते । यदि निषेकसमये रसमितद्वादशांशगतोनचन्द्रो भवेत्तदा शतपदचक्रानुसारेण मकरान्तनिष्ठनक्षत्रचरणान्ते जन्म वाच्यम् । अत्र षष्ठद्वादशांशस्यैतत्कालोत्पन्ननक्षत्रार्थमनुपातः । यदि द्वादशांशप्रमाणेन सम्पूर्णेनानेन ( २ । ३० ) सवर्णितेन खबाणेन्दुमितेन ( १५७ ) राशेरष्टादशशतकलाप्रमाणं ( १८०० ) लभ्यते तदा भुक्तद्वादशांशप्रमाणेनानेन ( १४ । १७ ) —( १२ । ३० ) = ( १ । ४७ ) सवर्णितेन ( १०७ ) किमिति । फलं राशिभुक्तकलामानं वेदाष्टयमेन्दुमितम् ( १२८४ ) अत्र "भभोगोष्टशतीलिप्तेत्यादिसूर्यसिद्धान्तवचनात्तत्कलामानं खाभ्राष्टभक्तं फलं रूपसमं ( १ ) तेन नवर्क्षचरणविहितमकरराशेः श्रवणाख्यनक्षत्राद्यचरणं गतं स्यात् । शेषादस्माद्वेदाष्टवेदमितात् [ ४८४ ] अनुपातेन तन्नक्षत्रचतुर्थघटिकाद्ये जन्मवाच्यम् । अथेष्टकालसाधनार्थमुदाहरणम् । तत्र निषेककालिकलग्नं ५।२८ ।२६।२५। अस्य नवमांशो नवमः कन्याख्यः स दिनबली तेन दिनगतसाधनार्थमनुपातः । यदि नवांशखण्डप्रमाणेनानेन ( ३ । २० ) सवर्णितेन द्विशतकलामितेन [ २०० ] गर्भाधानदिवसीयदिनमानं सप्तविंशतिघटीप्रमाणं [ २७ ] लभ्यते तदा नवमखण्डगतप्रमाणेनानेन [ २८ । ३७ ] — [ २६ । ४० ] = ( १ । ५७ ) सवर्णितेन ( ११७ ) किमिति जातम् $\frac{( २७+११७ )}{२००}$ $= \frac{[ ३१५९ ]}{२००} =$ [ १५ । ४८ ] एतत्समये जन्म भविष्यतीति वा-

च्यमतो जन्मकालिकं ग्रहलग्नादिकं सर्वं बोध्यमतः सर्वन्निरवद्यम् ।

## ( अ ७ ) नीचेऽतोर्धमित्यादि ( २ )

अत्रयुक्तिः । यद्युच्चनीचान्तरसमोच्चखेटान्तरसमाभिरष्टादशशतकलाभिः खेटपरमायुषोर्धं नाशस्तदोच्चोनेष्टखेटकलाभिः किमिति । फलं परमायुषि शाधितमायुःस्यादेवमुच्चन्नीचं यावत् । नोचाद्विच्युतस्याच्चमप्राप्तस्य नीचोनखेटान्तरकलाभिः पूर्ववदानीतफलं परमायुषोर्धे संयोज्यायुर्भवतीति वेदितव्यम् ।

## ( अ ७ ) सार्धोदितोदितनवांशहतादिति ( ४ )

अत्रोपपत्तिः । यदा परमोच्चस्थो ग्रहो भवति तदाऽष्टाधिकशतनवांशांतरं तथा परमायुश्च भवत्येतानुपातः । यद्यष्टात्तरशतनवांशान्तरैःपठितायुस्तदेष्टनवांशैःकिमिति । फलमिष्टनवांशका परमायुषि हानिःस्यात्तत्स्वरूपम् $\left(\frac{\text{प} \times \text{इन}}{१०८}\right)$ पुनरनुपातः । यदि परमायुषि साधिता हानि स्तदेष्टायुषि केति । फलम् $\left(\frac{\text{प} \times \text{इन} \times \text{इआ}}{\text{प } १०८}\right)$ अत्र हरगुणयोस्तुल्यत्वान्नाशे कृते जातम् $\left(\frac{\text{इन} \times \text{इआ}}{२०८}\right)$ तेनोपपन्नं सर्वम् । अथास्य प्रकारान्तरेणोपपत्तिः ।

लग्नान्ते ग्रहायुर्द्वादशांशतुल्याहानिर्लग्नादौ तस्या अभावः स्यात्तथाऽत्रक्रमेण नवांशानां परमत्वभावाभावान्नवांशेभ्यो हान्याःसाधनं कर्त्तुं युज्यते तत्रानुपातः । यदि नवभिर्नवमांशैर्द्वादशांशतुल्यापचयस्तदेष्टनवमांशैः किमिति हरघाते हरे कृते जातम् $\left[\frac{\text{इआ} \times \text{इन}}{१०८}\right]$ तेनोपपन्नं सर्वम् ॥

## [ अ ७ ] अनिमिषपरमांशक इति [ ६ ]

अत्र युक्तिः । अत्र नीचादिच्युतस्य बुधस्य राश्यादिकमिदं १ । ० । २५ । ० स्वनीचेनानेन ११ । १५ । ० । ० हीनं जातम् १ । १५ । २५ । ० । कलाकरणार्थमेतत्सवर्णितम् [२७२५] यदि भांशार्धकलाभिराभिः [ १०८०० ] बुधपरमनीचवर्षाणि षट् लभ्यन्ते तदैताभिः ( २७२५ ) किमिति । फलं वर्षादिकम्
$\frac{६ \times २७२५}{१०८००}$ = १ । ६ । ५ । बुधपरमनीचवर्षे रससमे संयोज्य जातं बुधेष्टायुः ७ । ६ । ५ । सर्वार्धत्रिचरणेत्यादिपद्येन लग्नादेकादशस्थानसत्वेन भौमस्य परमायुः पञ्चदशवर्षात्स्वार्धवर्षादिकं [ ७ । ६ ] विशोध्य सार्धानि सप्तवर्षाणि [ ७ । ६ ] एवं सौरस्याष्टमस्थानगतत्वात्परमायुः प्रमाणादेकविंशतिमितात्स्वपञ्चभागं [ ४ । २ । १२ ] विशोध्य शेषमिदं ( १६ । ९ । १८ ) परमाचार्येण षोडशवर्षाणि स्वीकृतानि [ १६ ] अन्येषां परमायुस्तुल्यमेव । लग्नस्य नवमनवांशसत्वान्नववर्षाणि [ ९ ] सर्वेषां योगार्थंन्यासः ।

योगे कृते जातम् ( १२० । ० । ५ ) अत्रोपपन्नं सर्वम् ॥=॥

| र | चं | मं | बु | बृ | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १९ | २५ | ७ | ७ | १५ | २१ | १६ | ९ |
| ० | ० | ६ | ६ | ० | ० | ० | ० |
| ० | ० | ० | ५ | ० | ० | ० | ० |

## ( अ ७ ) सत्योक्ते ग्रहमिष्टमित्यादि ( १० )

अत्रोपपत्तिः । ग्रहभुक्तनवांशराशितुल्यामित्यादिपद्यबलेन ग्रहभुक्ता ये नवमांशास्तत्संख्यकानां मेषादेरारभ्य कलनया यत्र राशौ पूर्तिः स्यात्तद्राशिमितं वर्षप्रमाणमायुः स्यादेवं यदि भुक्त-नवांशा द्वादशाधिकास्तदा द्वादशभक्ताद्भुक्तनवांशादाप्तं भुक्तन-:वांशानामेकद्वयादिपरिवर्त्ताख्यः शेषनवांशसंख्याकसमवर्षायु स्यादेवं द्वादशाधिकं वर्षं कथमप्यंशायुर्नः स्यादेतदर्थस्य वा-सनासिद्धत्वात्तथा भट्टोत्पलटीकाकारव्याख्यानाच्च । एवं यत्र तत्र राशौ मेषांशकस्य वर्षमेकं वृषांशकस्य द्विवर्षमित्या-दिबोध्यमत्रैकराशौ नवनवांशाः सन्त्यतोनुपातः । यद्यष्टादशश-तराशिकलाभिर्नवनवांशास्तदेष्टग्रहकलाभिः किमिति । फलं $\frac{(\text{९ इक})}{\text{१८००}} = \frac{(\text{इक})}{\text{२००}}$ ग्रहभुक्तनवांशाः शेषमाद्याभिधम् । तत्र परिवर्त्ताख्यानयनार्थमनुपातस्तद्यथा द्वादशनवांशैरेकः परिवर्त्तो लभ्यते तदाऽऽप्तनवांशैः क इति । फलं $\frac{(\text{आ})}{\text{१२}}$ परिवर्त्तसंख्या-प्रमाणं प्रयोजनाभावात्तत्त्याज्यम् । अवशेषं वर्त्तमानपरिवर्त्तस्ये-वन्नवांशसमं तत्तुल्यवर्षमायुः । परञ्चैकैकनवांशवृद्धावेकैकवर्ष-वृद्धिसत्वात्सच्छेदकप्रथमाख्यशेषं वर्षाद्यवयवरूपमतोनुपातः । यद्येकेन वर्षेण द्वादशमासास्तदाऽनेन वर्षावयवेन $\frac{(\text{प्रशे})}{\text{२००}}$ क इति । फलं मासाः सच्छेदकशेषं मासावयवरूपं ततः पूर्ववदनु-पतनाद्दिनाद्यानयनं बोध्यमित्युपपन्नं सर्वम् ।

**(अ ६) एतत्प्रतिभा लघुजातकोक्तराश्यंशकला गुणिता द्वादशनवभिरित्यादि ॥ १ ॥**

अत्र वासना । एकस्मिन्राशौ नवनवांशसत्वान्नववर्षाणि भवन्त्यतस्तन्मासा अष्टोत्तरशतसमास्ततोऽनुपातस्तद्यथा यद्येकराशिना नागाभ्रेन्दुसममासास्तदा ग्रहराशिभिः क इति । आगताः खेटराशिभवमासाः ( ग्रा १०८ ) / १ अथैकांशभवायुषः साधनार्थमनुपातः । खाग्निभागैरष्टोत्तरशतमासास्तदैकेनांशेन क इति स्वरूपम् ( १०८ ) / ३० । एतद्दिनार्थमनुपातस्तद्यथा यद्येकेन मासेन खाग्निमितदिनानि तदाऽऽनीतफलेन कानीति फलमेकभागभवदिनानीति स्वरूपम् ( १०८ ) । यदि रूपांशेनाष्टोत्तरशतदिनानि तदा ग्रहांशैः कानीति । फलं ( १०८ ग्रअं ) / १ ग्रहांशभवदिनानि । एवं यद्येककलया पूर्ववदानीताष्टोत्तरशतघटिकास्तदा ग्रहकलाभिः का इति । फलं ( १०८ × ग्रक ) / १ ग्रहकलाभवघटिकाः । एवं विकलातः पलानयनमनुक्तमपि बोध्यम् । एवमष्टाधिकशतसमैर्नवद्वादशघातैर्गुणितंखेटराश्यादिकं क्रमाद्वर्षादिकमायुः स्यात् । अंशायुः प्रमाणस्य द्वादशवर्षाल्पकत्वात्पूर्वमानीतवर्षवृन्दं द्वादशभक्तं फलस्य पूर्ववत्प्रयोजनाभावादवशेषं वर्षादिकं बोध्यमित्युपपन्नं सर्वम् ॥

## ( अ ६ ) अथ लघुजातकोक्त होरादायोऽप्येवमित्यादि ( २ )

अत्र युक्तिः । किन्त्वत्र भांशप्रमितं ददातीति पद्यबलेन लग्नभुक्तनवांशराशितुल्यलग्नायुः प्रमाणात्खेटायुर्वल्लग्नायुः प्रमाणानयनं समुचितमेव पूर्ववचनप्रमाणदनुपातः । खाग्निभागैर्द्वादश मासास्तदा लग्नेष्टांशैः किमित्यागतं ( $\frac{\text{१२ इअं}}{\text{३०}}$ ) मासप्रमाणम् । सच्छेदकशेषस्य मासावयवत्वादनुपतनात्पूर्ववद्दिनाद्यवयवानयनं बोध्यमित्युपपन्नं यथोक्तम् ॥

## ( अ ८ ) स्थानान्यथैतानि सवर्णयित्वेति ( ४ )



अत्रोपपत्तिः । ये ग्रहा दशेशेन सार्धमेकर्क्षगोर्द्धमित्यादिस्थानेषु वर्त्तमानास्तेषामन्तर्दशाविभागा भवितुमर्हन्ति । तत्कथं तदुच्यते । यावन्तः स्वान्तर्दशापाचकास्तेषां दशानाथान्तर्दशापेक्षयाऽर्धत्र्यंशादिविभागा यथा सम्भवन्ति तथा महादशायास्तावन्तो विभागास्तदैक्यं महादशासमं स्यादतो महादशेशस्याज्ञातान्तर्दशामानं तथा कल्प्यं यथा सर्वासामन्तर्दशानां योगो महादशासमः स्यात्तथा यावत्तावत्प्रकल्प्य सर्वेषां विभागानां न्यासः ( $\frac{\text{या}}{\text{१}} + \frac{\text{या}}{\text{२}} + \frac{\text{या}}{\text{३}} + \frac{\text{या}}{\text{७}} + \frac{\text{या}}{\text{४}}$ ) समच्छेदविधिना योगस्वरूपमिदं ( $\frac{\text{या ३७४}}{\text{१६८}}$ ) महादशासममिति पक्षौ

$\frac{\text{(या ३७४)}}{\text{१६८}}$ = मद । अनेन $\left(\frac{\text{३७४}}{\text{१६८}}\right)$ पक्षद्वयं विभज्य जातं यावत्तावन्मानमिदम् (या) = $\left(\frac{\text{मद × १६८}}{\text{३७४}}\right)$ । यद्येकेन यावत्तावतेदं तदा पूर्वकथितस्वस्वयावत्तावद्भागेन किमिति । जातानि सर्वेषामन्तर्दशामानानि ( मद $\frac{\text{१६८}}{\text{३७४}}$ + मद $\frac{\text{८४}}{\text{३७४}}$ + मद $\frac{\text{५६}}{\text{३७४}}$ + मद $\frac{\text{२४}}{\text{३७४}}$ + मद $\frac{\text{४२}}{\text{३७४}}$ ) अत्र महादशायाः सवर्णितस्वस्वभागा गुणका तथा भागैक्यसमोहरः परं सर्वासामन्तर्दशानां योगो महादशासमः कथं तदुच्यते । अत्र योगे कर्त्तव्ये समहरगुणकत्वाद्भागानां योगोऽयं ( ३७४ ) पृथक्गुणकेनानेन (मद) सङ्गुणय हरेणानेन ( ३७४ ) विभज्य च जातम् $\left(\frac{\text{मद ३७४}}{\text{१३७४}}\right)$ =( मद ) एवमन्तर्दशामानं महादशामानं प्रकल्प्य विदशादिकमनुक्तमपि साध्यमत उपपन्नं सर्वम् ।



## [ श्र १० ] अथ लघुजातकोक्तभागाः सदृशच्छेदैरित्यादि [ ६ ]

अत्रोपपत्तिस्तुकथितपद्यवत्सुस्पष्टैवेति

**अथ बहूपयोगाज्जीवस्याष्टवर्गो बालावबोधार्थमुच्यते ।**

## [ अ ८ ] दिक्स्वाद्याष्टमदायबन्धुषुकुजादिति [ ५ ]

अनेन जीवः कुजादेतेषु १०।२।१।८।७।११।४। स्वादात्मीयस्थानादेतेषु १०।२।१।८।७।११।४।३। तथा सूर्यादेतेषु १०।२।१।८।७।११।४।३।९। शुक्रादेतेषु ५।२।६।१०।११।९। चन्द्रादेतेषु ७।११।२।९।५। शनेरेतेषु ३।६।५।१२। बुधादेतेषु १०।५।६।२।४।११ १।९। लग्नादेतेषु १०।६।२।४।११।१।९।७। पठित स्थानेषु स्थितः शुभः स्यात्। पठितस्थानेभ्योभिन्नस्थानेषु संस्थितो जीव अशुभः स्यात्।

अत्रेदमवधेयम्। यानि शुभस्थानानि तानि बिन्दूपलक्षितानि। यान्यशुभस्थानानि तानि रेखोपलक्षितानि कार्याणि। ततः शुभाशुभयोरन्तरं विधायावशेषं फलं वदेत्। तत्र बिन्द्वधिके शुभं रेखाधिके कष्टम्। समे समम्। यत्र बिन्द्वष्टकं तत्र शुभं पूर्णम्। यत्र च षड्बिन्दवस्तत्र पादोनं फलम्। यत्र च बिन्दुचतुष्टयं तत्रार्द्धं फलम्। यत्र बिन्दू द्वौ तत्र पादं फलम्। एवमशुभफलस्य रेखाभिः कल्पना विभाव्या।

अत्रोदाहरणम्। जन्मकालिकमेषलग्नाच्चतुर्थस्थाने कर्कस्थो रविः। प्रथमस्थाने मेषस्थश्चन्द्रः। दशमे मकरगतः कुजः। सप्तमे तुलाधरस्थितो बुधः। द्वादशे मीनस्थो जीवः। रिपौ कन्यागतः शुक्रः। नवमे कार्मुकस्थो रविसुतः। अथाष्टकुण्डलिकायां जन्मकालिकखेटाक्रान्तराशिभ्यः पूर्वरीत्या शुभाशुभचिह्नस्थानाज्ज्ञातंकुण्डलिकास्वरूपम्।

२ ०००००० ॥
बृ ००० ||||
१२
११ ००००० ०० ।
३ ००० |||||
१ ००००० ल० चं |||
र ४ ००००० |||
१० मं ०००००० ॥
५ ००००० |||
७ बु •०००००० ।
९ श ००० ||||
शु ६ ००० |||
८ ००० ||||



अत्र मेषे बिन्दुपञ्चकं रेखात्रयञ्च जातमनयोरन्तरे कृते द्वौ बिन्दू जातावतो जीवश्चारवशाद्यदा यदा मेषस्थस्तदा तदा जातस्य शुभः स्यात् । एवं वृषकर्कसिंहतुलामकरराशिषु बिन्द्वधिकभावाच्छुभः । अन्यराशिषु रेखाधिकत्वादशुभः । एवमन्यखेटानामपि बोध्यमतः सर्वन्निरवद्यम् ।

## ( अ १२ ) पूर्वशास्त्रानुसारेण मया वज्रादयः कृता इत्यादि ( ६ )

अत्र युक्तिः । यदा सर्वे खेटा लग्नसप्तमयोः स्थितास्तदा शकटाख्यो योगः । एवं खबन्ध्वोः स्थितास्तदा विहगाख्यो योगः परमत्र शकटाण्डजवच्छुभाशुभैर्वज्राख्यो योगस्तथा तद्वि

परीतगौर्यवाख्यो योगो विहितः। तेन लग्नसप्तमयोः स्थिताभ्यां बुधशुक्राभ्यां चतुर्थदशमयोः स्थितो रविर्यदा स्यात्तदा वज्रयोगलक्षणं तदन्यथा यवलक्षणम्। परञ्चैवं बुधशुक्राभ्यां चतुर्थराशावपि गतेरवौ पूर्वं पश्चाद्वा तद्योगलक्षणं जातम्। अथ सिद्धान्तशिरोमणौ बुधस्य परमं शीघ्रफलमेकविंशतिभागाः पादोनद्वात्रिंशत्कलाधिकाः २१।३१।४३। तथा शुक्रस्य च परमं शीघ्रफलं खबाणभागाः १।२०। मन्दस्पष्टबुधशुक्राभ्यां परमशीघ्रफलाधिकान्तरितो स्पष्टौ तौ कथमपि न भवतः परञ्च 'अर्कशुक्रबुधपर्यया विधेरित्यादिना" भास्करीयपद्येन मध्यमबुधशुक्रसमो मध्यमार्कस्तेन मध्यमार्कात्पूर्वं पश्चाद्वा परमधनाख्यमन्दशीघ्रफलाभ्यां क्षयाख्यफलद्वयेन च क्रमेण स्पष्टौ तौ स्याताम्। यदा रवेः परमफलमृणं तथा बुधशुक्रयोः परमफलद्वयं धनं तदा स्पष्टार्कात्स्पष्टौ तौ पूर्वं परमफलत्रययोगेन भवतः। यदा तु रवेः परमफलं धनं बुधशुक्रयोः परमफलद्वयमृणं तदा स्फुटार्कात्परं परमफलत्रययोगेन स्पष्टौ तौ भवतः। तदन्यथा तदल्पेन तस्मात्तौ स्यातामिति निजमत्या चिन्त्यम्। परञ्च परमफलत्रययोगस्तु कथमपि राशिचतुष्टयं न स्यात्तद्यथा "मन्दोच्चनीचपरिधिस्त्रिलवांनशक्रभागा रवेरित्यादिना" भास्करीयपद्येन बुधशुक्रयोः परमे मन्दफले भागाद्ये ६।१।५४ ॥ १।४४।३६ ॥ तथा रवेः परमफलमंशाद्यम् २।१०।३१ ॥ अत्र बुधस्य परमफलद्वययोगोऽयं २७।३३।३७। रविपरमफलेन युतोजातः २६।४४।८ ॥ तेन स्पष्टरवेः पूर्वं पश्चाद्वा किञ्चिदल्पेनैकभेन परमान्तरितो बुधः स्यात्त-

दन्यथा सुतरामल्पान्तरितः । अत्र यदि स्वल्पान्तरात्स्पष्टार्कसमो मन्दस्पष्टो बुधो मन्यते तदा तु सुतरां स्पष्टार्कात्स्पष्टो बुधः स्वपरमशीघ्रफलाधिकान्तरितः कथमपि न स्यात् । एवं शुक्रस्यापि बोध्यम् । तेन स्पष्टार्काच्चतुर्थभवने स्पष्टबुधशुक्रयोः स्थितत्वाभावात्तद्योगलक्षणं न घटते । अथ लल्लमते बुधस्य परमशीघ्रफलं शशिगुणांशमितं [ ३१ ] तदुक्तेन "बाणाब्धित्रिभिः शशिगुणैः खयमैः खबाणै रङ्गैर्लवैस्त्रिगृहमाद्यपदं युतं स्यादित्यादिना" अत्रापि पूर्ववत्फलत्रययोगोऽयं ३८।१२।२० । तेन यदि राश्यन्तगो रविस्तदा तस्मात्तृतीयराशौ बुधः स्यात्परमफलत्वात् । अतो लल्लाचार्यमतेनापि तद्योगलक्षणं न घटते । अथ सूर्यसिद्धान्तमते तु "रवेर्मन्दपरिध्यंशा मनवः शीतगो रदाः" इत्यादिनार्कस्य पठितमन्दनीचोच्चपरिधिभागेभ्यो मनुमितेभ्यः "त्रिज्योद्धवं फलमिहान्त्यफलस्य जीवा" इत्यादिना भास्करोयपद्येन साधितान्त्यफलज्यास्वरूपम् [ ४।४० ] खार्कत्रिज्यायाम् । तत उक्तरीत्या परमफलं भागाद्यम् [ २।१३।२० ] अथार्कमते "कुजादीनामतः शैघ्र्या युग्मान्तेऽर्थाग्निदस्रकाः" इत्यादिना बुधस्य पठितपरिधिभागेभ्यो गुणाग्निचन्द्रेभ्यः पूर्वरीत्या परमशीघ्रान्त्यफलज्यास्वरूपम् [ ४४।२० ] । तच्चापं परमफलं भागाद्यम् [ २१।४५।१६ ] एवं "युग्मान्तेऽर्थाद्रयः खाग्नी सुराः सूर्या नवार्णवाः' इत्यादिना सूर्यसिद्धान्तपद्येन बुधस्य मन्दपरिधिभागेभ्यः खाग्निमितेभ्यः पूर्ववदन्त्यफलज्यामानम् [१०] तच्चापं परमं फलं भागाद्यम् [ ४।४५ ४३ ] अथानीतफलत्रन्य

योगोऽयं ( २८।४४।१६ ) अनेनापि तद्योगलक्षणं न घटते ॥ अथ यन्मते सूर्यकेन्द्रादासमन्तात्खेटभ्रमणं तन्मतेनापि स्पष्टबुधशुक्रौ त्रिभाल्पान्तरे स्याताम् । तत्र युक्तिः ॥ तत्र तावत्सूर्यकेन्द्रादासमन्ताद्बुधशुक्रौ भ्रमतस्तथा रविकेन्द्रात्कृतरविकर्णव्यासार्धवृत्तस्यभूकक्षाख्यस्य मध्यगते बुधशुक्रकक्षावृत्ते चेति सुप्रसिद्धं नवीनसिद्धान्तविदाम् । अतो भूकेन्द्राद्रविकेन्द्रगं सूत्रं रविकेन्द्रात्कृतबुधकक्षायां यत्र लग्नं तत्र यदि बुधस्तदा कल्पितभगोलाख्ये तत्सूत्रसंलग्नौ रविबुधौ समौ स्तः । एवं प्रतिदिने भूकेन्द्रात्स्वकक्षास्थितबुधोपरि नीयमानं सूत्रं यदा बुधकक्षायाः स्पर्शसूत्रं स्यात्तदैव क्षेत्रावलोकनात्कल्पितभगोले बुधसूर्ययोः परमान्तरं स्यात् । परञ्च तन्नवत्यंशान्तरं भवेत्तत्र युक्तिः । भूकेन्द्राद्रविकेन्द्रं यावन्नीयमानं सूत्रं कर्णः । भूकेन्द्राद्बुधकक्षावधि स्पर्शसूत्रे कोटिः । रविकेन्द्राद्बुधकक्षास्पर्शबिन्दुपर्यन्तं नीयमानं सूत्रं बुधकक्षाव्यासार्द्धाख्यंभुजः । अत्र जात्ये कोटिकर्णयोरुत्पन्नं कोणमानं रेखागणितरीत्या नवत्यंशाल्पं यत्तदेव भगोले तयोः परमान्तरं तेन कथमपि स्पष्टरवेः स्पष्टबुधो नवत्यंशाधिकोनः स्यादेवं शुक्रस्यापि बोध्यं तुल्यन्यायात् । एवं बुधशुक्राभ्यामन्यखेटानां न स्याद्यतस्तेषां भ्रमणवृत्तानि भूभ्रमणवृत्ताद्बहिर्गतानि सन्ति परमरविकर्णात्सूर्यान्यखेटानां परमाल्पबिम्बान्तरसूत्राधिक्यवशादतः सर्वन्निरवद्यम् ।

## ( अ १२ ) नवदिग्वसवस्त्रिकाग्निवेदैरिति ( १ )

अत्र युक्तिः । अत्र नाभसयोगानां चत्वारो विकल्पाः ]

तत्राकृतिसमाख्ययोगा एको विकल्पः। आकृतियोगाः संख्यायोगाश्चेतिविकल्पद्वयम्। आकृतियोगाः संख्याख्ययोगा आश्रयाख्ययोगाश्चेति विकल्पत्रयम्। एवमाकृतिसंख्याख्याश्रयाख्ययोगादलयोगौ चेति विकल्पचतुष्टयम्।

तत्राकृतियोगा विंशति प्रकारास्तद्यथा "आसन्नकेन्द्रभवनद्वयगैरित्यारभ्य सङ्ग्रहमित्यन्तम्" गदाख्यः १ तथा शकटम् २ विहगः ३ शृङ्गाटकम् ४ हलाख्यः ५ वज्रम् ६ यवः ७ कमलम् ८ वाप्याख्यः ९ यूपाख्यः १० इषुः ११ शक्तिः १२ दण्डाख्यः १३ नौकूटच्छत्रचापाख्यं योगचतुष्टयम् १४।१५।१६।१७। अर्द्धचन्द्रः १८ समुद्रः १९ चक्रम् २० क्रमेणैते विंशतियोगाःसन्ति। एव "संख्यायोगाः स्युः सप्तसप्तर्क्षसंस्थैरित्यादिना" वल्लकी १ दामिनी २ पाशः ३ केदारः ४ शूलयोगः ५ युगाख्यः ६ गोलः ७ इति सप्तसंख्यायोगाःसन्ति। तथा 'रज्जुर्मुशलं नलश्चराद्यैरित्यादिना"।

रज्जुः १ मुशलम् २ नलः ३ इति त्रय आश्रययोगाः। तथा स्रक्सर्पौ द्वौ दलयोगौ। तथा चोक्तं जातकदर्पणे "आकृतिर्विंशतिः प्रोक्ता संख्या सप्तप्रकारकाः। आश्रयस्त्रिप्रकारः स्याद्दलाख्यौ द्विप्रकारकौ" अथ प्रस्तुतमुच्यते। आकृतिसंख्यायोगविकल्पद्वयेन सप्तविंशतियोगा भवन्ति ते तु त्रिगुणितनवमिताः। आकृतिसंख्याख्याश्रयदलयोगजनितेन विकल्पचतुष्टयेन द्वात्रिंशन्मिता योगास्ते तु वेदगुणितनागमितास्तेनोपपन्नं पूर्वार्द्धम्।

अथ परार्द्धश्चोच्यते। यवनाचार्यमते तु त्रयोविंशतिमिता

आकृतियोगाः सन्ति तद्यथा श्रीवराहमिहिरमतेन गदायोगस्य चत्वारो भेदाः सन्ति। तत्र यवनमते प्रथमभेदे गदायोगः। द्वितीयभेदे शंखयोगः। तृतीयभेदे वज्रकः। चतुर्थे ध्वजयोगः स्यादिति भट्टोत्पलटीकाकारेण स्फुटं विहितमतो योगत्रयेण सहिता विंशतियोगास्त्रयोविंशतिसमा भवेयुः। एवं तन्मते संख्यायोगाः सप्तविंशत्यधिकशतसमाः (१२७) सन्ति तद्यथा-ऽत्र सप्तखेटैरेकद्वित्र्यादिविकल्पवशात्ते विहिता स्तेन नगमिताङ्कानाम्। "एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैरित्यादिना" भेदार्थन्न्यासः ७।६।५।४।३।२।१।

१।२।३।४।५।६।७।

अत्र यथोक्तवदेकद्वित्रिपूर्वजनितभेदानामेतेषां ७।२१।३५।३५ २१।७।१। योगः सप्तविंशत्यधिकशतसमो जातः (१२७)। अस्य तथा पूर्वानीताकृतियोगप्रमाणस्याग्नियममितस्य (२३) च योगे कृते जातं पञ्चाशदधिकशतसमम् (१५०) परञ्चैकैकं राशिं लग्नगतमधिकृत्य यवनाचार्येण तद्विहितमिति भट्टोत्पल टीकाकारेण स्फुटं व्याख्यातं तेन पञ्चाशदधिकशतसमायोगा द्वादशगुणितास्तदा राशिद्वादशकजनिताष्टादशशतसमाः[१८००] भवन्तीत्युपपन्नं सर्वम्।

## (अ १३) त्रिंशत्सरूपाः सुनफाऽनफाख्या इत्यादि (४)

अत्र युक्तिः। अथ "हित्वार्कं सुनफानफादुरुधुराः स्वान्त्यो-

भयस्थैर्ग्रहैरित्यादिना' चन्द्राद्द्वितीये भौमादिग्रहैः सुनफाख्यो योगः । चन्द्राद्द्वादशे तैः खेटैरनफाख्यो योगः तथा चन्द्रात्स्वान्त्ये तैरेव खेटैर्दुरुधुराख्यो योगः । अत्र पूर्वरीत्या पञ्चानां भेदार्थन्न्यासः ५ । ४ । ३ । २ । १ । पूर्ववदेकद्वित्र्यादिविकल्प-

१ । २ । ३ । ४ । ५ ।

जनितभेदानामेतेषां ५ । १० । १० । ५ । १ । योगः ( ३१ ) एकत्रिंशत्समो जातस्तेनैकत्रिंशत्समाः सुनफाख्याः योगाः स्युः । तावन्त एवानफाख्या योगास्तुल्यन्यायात् । अथ दुरुधुराप्रभेदश्चोच्यते । तत्र तावद्भौमादिशन्यन्तानां पञ्चखेटानामेकं द्वितीयस्थाने स्थिरं कृत्वा द्वादशस्थाने चतुर्णां खेटानामेकद्वित्र्यादिस्थितवशात्सागरमिताङ्कानां पूर्ववद्भेदार्थन्न्यासः ४।३।२।१

१।२।३।४

अत्र यथोक्तवज्जाता एते भेदाः [ ४ । ६ । ४ । १ ] परञ्च पञ्चखेटसत्वात्पञ्चघ्नास्तेभेदाः ( २० । ३० । २० । ५ ) अत्र स्थानद्वयनिष्ठग्रहपरिवर्त्तनवशात्पञ्चघ्नभेदा द्विघ्नाः कर्त्तव्यास्तत्रापि ग्रहैकवशात्पञ्चघ्नप्रथमभेदा विंशतिसमाः स्थानद्वयजनिताः सुतरामागच्छन्त्योऽवशेषपञ्चघ्नभेदा एव द्विघ्ना जाताः [ २० । ६० । ४० । १० । ] अत्रेदमवधेयम् । यदैकस्थाने द्वितीयस्थाने चैकैकः खेटस्तदा विंशतिभेदाः । एवमेकस्थाने खेटैको द्वितीयस्थाने द्वौ खेटौ तदा षष्टिमितभेदाः । तथैकस्थाने खेटैको द्वितीयस्थाने त्रयः खेटास्तदा चत्वारिंशद्भेदाः। एवमेकस्थाने खेटैको द्वितीयस्थाने चत्वारः खेटास्तदा दिग्मितभेदाः । अत्र प्रथम-

स्थाने खेटद्वयं स्थिरं मत्वा द्वितीयस्थाने त्रयाणां खेटानां पूर्ववद्भेदार्थन्यासः (३।२।१।) अत्रापि पूर्वरीत्या जातास्ते
(१।२।३।)
भेदाः (३।३।१) परञ्च त्रयाणामाद्यभेदा राममिताः खेटैकस्थिरवशात्पूर्वभेदान्तर्गता एव सिद्धास्तेनाद्यभेदमपहायान्यभेदद्वयं पूर्ववत्पञ्चघ्नं जातम् [१५।५] अत्रापि स्थानद्वयवशेन पञ्चघ्नभेदद्वयं द्विघ्नं जातम्। [३०।१०] अत्रेदमवधेयम्। स्थानद्वये द्वौ द्वौ खेटौ तदा त्रिंशद्भेदाः। यदैकस्मिन् स्थाने खेटद्वयमन्यत्र खेटत्रयं तदा दशभेदाः। अत्राद्यस्थाने खेटत्रयं स्थिरंमत्वाऽन्यत्र खेटद्वयस्योक्तवद्भेदार्थन्यासः [२।१]
[१।२]

अत्राप्युक्तवद्भेदद्वयेऽस्मिन् (२।१) प्रथमभेदं द्विमितं पूर्ववद्विहायावशेषभेदे रूपमिते पञ्चघ्ने द्विघ्ने चेति कृते जाता दिग्मितभेदा वास्तवाः (१०) अत्र पूर्वानीतभेदानामेतेषां [२०।६०।४०।१०।३०।१०।१०) योगोऽयं (१८०) खाष्टेन्दुसमो जातः। अत्र भास्करीयप्रस्तारवल्लोष्टकप्रस्तारो विज्ञेयः। तेन यदुक्तं भट्टोत्पलेन लोष्टकप्रस्ताररीत्या दुरुधुरा विकल्पा न सिद्ध्यन्ति तन्न समीचीनमिति सुजनगणकैर्मध्यस्थबुध्या निपुणं विलोक्यमतः सर्वन्निरवद्यम् ॥

**जातकक्रोडग्रन्थ इहेति सद्बृहज्जातकपद्यभवा तु। कृष्णदत्तगणकेन कृताऽगात् वासना सुबिमला परिपूर्तिम् ॥**

रूपम् $\left(\frac{\text{८०० गन}}{\text{१}}\right) = (\text{गयो})$ । अत्र भयातोत्पन्नगतिकलामानं योऽयं तदेष्टकालिकः कलात्मकश्चन्द्रः स्यात् । तदर्थमनुपातस्तद्यथा यदि स्पष्टभभोगमितेनाष्टशतकलास्तदा भयातमितेनकेति फलं भयातभवं कलामानस्वरूपम $\left(\frac{\text{८०० भया}}{\text{भभो}}\right)$ तत्र भभोगषष्टिलवेन हरगुणावपवर्त्य हरस्थाने षष्टिः। गुणस्थाने छेदं लवञ्च परिवर्त्येत्यादिना सिद्धस्यास्य $\left(\frac{\text{भया ६०}}{\text{भभो}}\right)$ लब्धिसंज्ञा कृतेति जातम् $\left(\frac{\text{८००×ल}}{\text{६०}}\right)$ । इदं पूर्वानीतेनक्षत्रजगतियोगे योज्यते तदेष्टकलात्मकश्चन्द्रः स्यादिति रूपम् $\left[\left(\frac{\text{६० × ८०० गन}}{\text{६०}}\right) + \left(\frac{\text{ल ८००}}{\text{६०}}\right)\right]$



अष्टशतकलातुल्यगुणकत्वाज्जातम् $\left(\frac{\text{६० गन + ल}}{\text{६०}}\right)$ ८०० । तद्भागार्थं षष्टिभक्तं जातम् $\left(\frac{\text{६० गन + ल}}{\text{३६००}}\right)$ ८०० । गुणहरौ गुणकार्धेनापवर्त्य जातम् $\left(\frac{\text{६० गन + ल}}{\text{२}}\right)$ २ । अत उपपन्नं भागात्मकचन्द्रानयनम् । अथ चन्द्रगतिसाधनोपपत्तिः । यदि स्पष्टगतिकलाभिः षष्टिघटिकास्तदाऽष्टशतभभोगकलाभिः केति फलं घट्यात्मको भभोगः स्यादितिरूपम् $\left[\frac{\text{४८०००}}{\text{गक}}\right] = [\text{भभो}]$

पक्षाविमौ गतिकलाभिः सङ्गुण्य जातौ ( ४८००० ) = ( गक० भभो ) पुनर्भभोगेन विभज्य जातौ $\frac{(\text{४८०००})}{\text{भभो}}$ = ( गक ) तेनोपपन्नं सर्वम् ॥ ॥

अथास्य प्रकारान्तरेणोपपत्तिः । यदि भभोगघटीभिरेकं नक्षत्रं तदा भयातघटीभिः किमिति फलं वर्त्तमाननक्षत्रावयवरूपम् $\left(\frac{\text{१} \times \text{भया}}{\text{भभो}}\right)$ तदश्विन्यादिगतनक्षत्रप्रमाणेषु योज्यं तदाऽश्विन्यादेर्भयातावधि सावयवगतभानीतिस्वरूपम् [गन + $\frac{(\text{भया १})}{\text{भभो}}$ ]=( साग ) अथैषां भानामंशार्थमनुपातः । सप्तविंशतिनक्षत्रैर्भांशास्तदा सावयवनक्षत्रैः क इतिजातम् [ गन + $\frac{(\text{भया १})}{\text{भभो}}$ $\frac{\text{३६०}}{\text{२७}}$ ] अत्र गुणहरौ त्रिभिरपवर्त्य षष्ट्यक्षिघातसमं गुणकमानं च प्रकल्प्याद्यखण्डेन षष्टिमितेन सङ्गुण्य जातम् [ ६० गन + $\frac{(\text{भया ६०})}{\text{भभो}}$ $\frac{\text{२}}{\text{६}}$ अत उपपन्नं चन्द्रानयनम् ।

अथ गत्यानयनवासनोच्यते । भभोगघटीभिरष्टशतकलागतिस्तदा षष्टिघटीभिःकेति फलम् $\frac{(\text{६०} \times \text{८००})}{\text{भभो}}$ = $\frac{(\text{४८०००})}{\text{भभो}}$ कलात्मिकागतिः स्यादित्युपपन्नं सर्वम् ॥

अथ बालावबोधार्थमुदाहरणम् । तत्र मघानक्षत्रस्यैतद्घटि-

काद्यं भयाताख्यम् ( ३० । २ ) । भभोगः ( ५७ । ० ) । अत्र सवर्णितभयातमिदम् ( १८०२ ) षष्टिगुणं सवर्णितेन भभोगेनानेन ( ३४२० ) भक्तं फलम् ( ३१ । ३६ । ५० ) । गतर्क्षप्रमाणेषु नवमितेषु षष्टिगुणेष्वेषु ( ५४० ) तत्फलं युक्तं जातम् [ ५७१ । ३६ । ५० ] तद्द्विनिघ्नं नवाप्तं भागादिकम् [ २४७ । १ । ३१ ] । तद्राशिकरणार्थं खरामोद्धृतं फलं [ ४ । ७ । १ । ३१ ] राशिपूर्वः शशी स्यादिति ॥

**अथ चन्द्रानयने मदीयपद्यावतारः । खाभ्राष्टनिघ्नं निजभस्य यात भभोगभक्तं किल यत्फलं तत् । युक्तं खखाष्टाहतयातभेषु षष्ट्युद्धृतं चन्द्र इहांशपूर्वः ॥ १ ॥**

अत्रोपपत्तिः । "भभोगोष्टशतीलिप्ता" इत्यादि सूर्यसिद्धान्तागमप्रमाणेनानुपातः । भभोगसमभयातेनाष्टशतकला लभ्यन्ते तदेष्टभयातेन का इति जातम् $\left(\frac{८०० \text{ भया}}{\text{भभो}}\right)$ अत्रैकैकभे खाभ्राष्टकलाः सन्त्यतो यदि गतर्क्षसङ्ख्या खखाष्टभिर्गुण्यते तदेतन्नक्षत्रभवः कलात्मकश्चन्द्रः स्यात्तस्मिन् यदि पूर्वानीतभयातजं कलात्मकं फलं योज्यते तदेष्टकालिकश्चन्द्रो भवेदिति जातम् $\left[८०० \text{ गन} + \left(\frac{८०० \text{ भया}}{\text{भभो}}\right)\right]$ परञ्चेदं षष्टिभक्तं तदा भागपूर्वः शशी स्यादित्युपपन्नं सर्वम् ॥

ये जडाः कुण्ठधियो वासनां न विदन्ति तेषां प्रतीत्यर्थमुदाहरणम् ।

पूर्वकृतसवर्णितभयातं खाभ्राष्टगुणितं जातम् [१४४१६००] पूर्वानीतसवर्णितभभोगेन तद्भक्तं फलं कलादिकमिदम् ४२१ । ३१ । १४ । खाभ्राष्टगुणितेषु गतर्क्षप्रमाणेष्वेषु ( ७२०० ) युक्तं जातम् ( ७६२१ । ३१ । १४ ) षष्टिभक्तं तज्जातम् ( १२७ । १ । ३१ । १४ ) तद्राशिकरणार्थं खाग्निभक्तं फलं ( ४ । ७ । १ । ३१ । १४ । ) नीलकण्ठोक्तपद्येनानीतचन्द्रतुल्यं स्यादिति ॥

**अथ चन्द्रानयने मदुक्तं प्रकारान्तरम् । भयातं भभोगोद्धृतं यत्फलं वै युतं तद्गतर्क्षप्रमाणेषु तद्वै । विनिघ्नं खवेदैर्विभक्तं त्रिभिर्वा फलं भागपूर्वः शशो प्रागभवोवा ॥ २ ॥**



अत्रोपपत्तिः । पूर्वानीतांशपूर्वकचन्द्रस्वरूपम्

$\frac{(८०८+\text{गन}}{६०} + \frac{(८०० \text{ भया})}{\text{भभो}}$ । वा = $\frac{(८०० \text{ गन})}{६०} + \frac{(८०० \text{ भया})}{६० \text{ भभो}}$

अत्र तुल्यगुणहरौ पृथक् कृत्वा जातम् $\frac{८००}{६०} \times \frac{(\text{गन} + \text{भया})}{\text{भभो}}$

अत्र गुणहरौ विंशत्यापवर्त्य जातम् $\frac{४०}{३} \times \frac{(\text{गन} + \text{भया})}{\text{भभो}}$ ।

एवमन्यप्रकारान्तरमपि मतिमता गणकेन विभाव्यमतः सर्वन्निरवद्यम् ।

अत्रापि मन्दानां प्रतीत्यर्थमुदाहरणम् । पूर्वसवर्णितभयातं सवर्णितभभोगोद्धृतं फलम् [ ०० । ३१ । ३६ । ५२ ] तद्गतर्क्षेषु नवमितेषु युतं जातम् [ ९ । ३१ । ३६ । ५२ ) तच्चत्वारिंशद्गुणितं त्रिभक्तं जातम् ( १२७ । १ । ३१ ) तत्खाग्निभक्तं फलं ( ४ । ७ । १ । ३१ ) पूर्वानीतचन्द्रसमं स्यादिति ॥

**अथ भयातभभोगसाधनार्थं कस्यचित्पद्यम् ।**

**गतर्क्षनाडी खरसेषु शुद्धा सूर्योदयादिष्टघटीषु युक्ता । भयातसंज्ञा भवतीह तस्य निजर्क्षनाडी सहितो भभोगः ॥**

अत्र युक्तिः । अत्राभीष्टनक्षत्रमानं पूर्वदिने कतिमितमतीतं तदर्थं गतनक्षत्रमानं षष्टिघटिकातो विशोध्य शेषं गतनक्षत्रान्तादभीष्टार्कोदयावधि भवेदस्मिन्निष्टमानं योज्यते तदाऽभीष्टनक्षत्रमानं व्यतीतं भयाताभिधं स्यात्पूर्वशेषेऽभीष्टनक्षत्रमानं योज्यते तदा भभोगःस्यात् । यदि तन्नक्षत्रं वृद्धिसमाख्यं तदा भयातं पूर्ववद्भोगमानन्तु गतर्क्षोनषष्टिघटिकासु षष्टिघटिकास्तथा वृद्ध्यावशेषं नक्षत्रफलाख्यं च संयोज्य स्यात् । यदि वृद्ध्यावशेषान्तर्गतमितं तदा गतर्क्षोनषष्टिघटिकासु षष्टिघटिकास्तथेष्टमानं संयोज्य भयातं स्याद्भभोगस्तु पूर्ववदेव । परञ्च यद्दिवसीयेष्टमानं तद्दिवसीयार्कोदयकालिकनक्षत्रमानादिष्टमानमधिकन्तदाऽन्यथातद्यतितव्यं तदुच्यते । सूर्योदयकालिकनक्षत्रमानमिष्टाद्विशोध्यते तदा शेषमग्रिमनक्षत्रगतं स्यात् । तथा

नक्षत्रमानोनषष्टिघटिकासु द्वितीयसूर्योदयकालिकनक्षत्रमानं योज्यते तदा भभोगःस्यादेवं तदैव यदा नक्षत्रं क्षयाख्यं न स्यात् । तदन्यथा क्षयाख्यमानमेव भभोगमानं स्यादित्युपपन्नं सर्वम् ॥

एतत्सम्बन्धार्थं मदुक्तपद्यम् ॥

यदाऽभीष्टमानं गतर्क्षाधिकं स्यात्तदाऽभीष्टमा-
नाद्विशोध्यं भमानम् । भयातं तदैवं गतर्क्षोनषष्टि-
युताऽभीष्टनक्षत्रमानैर्भभोगः ॥ १ ॥

अत्रोपपत्तिस्तु क्षयाख्यभिन्नत्वे पूर्वकथितैवेति ।

( तं १ ) पूर्वं नतं स्याद्दिनरात्रिखण्डमित्यादि (२०)

अत्रोपपत्तिः । उदयक्षितिजादूर्ध्वयाम्योत्तरवृत्तावधिपूर्वकपालः । ऊर्ध्वयाम्योत्तरवृत्तादस्तकुजावधि परकपालः । एवमस्तकुजादधोयाम्योत्तरवृत्तावधिपूर्वकपालः । अधोयाम्योत्तरवृत्तादुदयकुजं परकपालः । दिवा चोर्ध्वयाम्योत्तरवृत्तादर्कावधि नतकालः स्यात् । रात्रौ चाधोयाम्योत्तरवृत्तार्कान्तरं नतकालः । तेन यदि पूर्वक्षितिजोर्ध्वयाम्योत्तरवृत्तयोरन्तर्गतेष्टमानं तदेदं दिनदलात्कुजयाम्योत्तरवृत्तान्तर्गतकालसमानाद्विशोध्यते तर्हि सूर्याद्याम्योत्तरवृत्तावधि पूर्वनतं स्यादेवं याम्योत्तरवृत्तात्परमस्तक्षितिजात्पूर्वमिष्टं तदेष्टमानाद्दिनदलं विशोध्य शेषमूर्ध्वयाम्योत्तरवृत्तादर्कावधि परनतंस्यादेवं दिवैव । यदाऽस्तक्षितिजादधः स्वाधोयाम्योत्तरवृत्ताप्राप्तमिष्टमानं तदा दिनमानोनेष्टमानं रात्रिगतसमं निशार्धाद्विशोध्यं शेषमिष्टाग्रादधोयाम्यो-

त्तरवृत्तावधि पूर्वनतमेवं पूर्वक्षितिजात्पूर्वमध्यो याम्यात्तरवृत्तात्परं स्वेष्टमानं तदा रात्रिदलोनरात्रिगतमानं परनतं स्याद्रात्राविवेति बोध्यम् ।

## ( तं १ ) तत्काले सायनार्कस्येति ( २१ )

पूर्वगर्भकुजे संलग्नापमण्डलप्रदेशोऽराश्यादिकं लग्नमिति वेदितव्यम् । एवमस्तकुजे संसक्तभवृत्तप्रदेशो यस्तदस्ताख्यलग्नम् । तथोर्ध्वाधोयाम्योत्तरवृत्ते संलग्नभवृत्तप्रदेशगृहाद्ये क्रमेण दशमचतुर्थलग्ने बोध्ये । तथोक्तं सिद्धान्तशिरोमणौ श्रीभास्कराचार्यैः । "यत्रलग्नमपमण्डलं कुजे तद्गृहाद्यमिह लग्नमुच्यते। प्राचि पश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिति दक्षिणोत्तरे" इति । अत्र लग्नशब्दव्युत्पत्त्या मध्यलग्नशब्देन चतुर्थदशमाख्यलग्नद्वयं बोध्यम् । अजाख्यगोलसन्धेर्नाडीवृत्ते पूर्वस्वस्तिकावधि लग्नस्य स्वदेशीयोदयपलानि यानि तानि गोलक्रमेण तात्कालिकार्कचरपलोनयुततद्रविनिरक्षदेशीयोदयपलसमैस्तदर्कस्वदेशीयोदयपलैरूनितानि तदा रविलग्नान्तर्गतक्षेत्रांशाभवस्वदेशीयोदयपलानि भवेयुरिति जातम् लस्वउ-( रनिउ ∓ रच ) कोष्ठापगमे कृते जातम् ( लस्वउ-रनिउ ± रच )= ( अंस्वउ ) परञ्चेदं सावनेष्टघटीपलेन तात्कालिकार्कक्षितिजान्तराहोरात्रवृत्तीयखण्डेनापि समं स्यादत्रयुक्तिःसम्पातरूपमेषादेर्लग्नस्वदेशीयोदयपलेभ्योऽजाख्यसम्पातात्तद्रविनिरक्षोदयपलानि विशोध्यावशेषमिदम् ( लस्वउ—रनिउ ) तद्रविगत-

ध्रुवप्रोतनाडीवृत्तसम्पातात्पूर्वस्वस्तिकंयावद्विषुवखण्डम् ॥ पूर्वस्वस्तिकात्तदर्काहोरात्रवृत्तकुजैक्योपरिगतध्रुवप्रोतनाडीवृत्तैक्यं यावत्तदर्कचरपलं तेन युतोनं तद्गोलक्रमेण सावनेष्टघटीपलमानमिति कृते जातमिदम् ( लस्वउ—रनिउ ± रच )= ( साप ) पूर्वकृतार्कलग्नान्तर्गतस्वदेशोदयपलस्वरूपसमं सिद्धम् । अथ भुक्तप्रकारे पूर्वरीत्या लग्नस्वदेशीयोदयपलोनार्कस्वदेशीयोदयपलमानमिदम् । रनिउ ∓ रच-( लस्वउ ) गोलक्रमेण रात्रिशेषकालमानसमं बोध्यम् । एवमौदयिकार्कलग्नयोरन्तर्गतस्वदेशोदयपलं तदर्कात्कुजावधि तद्रविगताहोरात्रवृत्तोयनाक्षत्रघटीपलेन सममिति वेदितव्यम् । एतेन सावनेष्टघटीकल्पनात्तात्कालिकार्कसम्बन्धेन तथा नाक्षत्रेष्टघटीकल्पनायामौदयिकार्कसम्बन्धेन लग्नानयनं भवितुमर्हति । परञ्च सावनेष्टघटिकातो विजातीयं नाक्षत्रं राश्युदयमानं कथं शोध्यमिति चेत्तदुच्यते । सावनेष्टघटीभवगतिकलाधिकतात्कालिकार्कादौदयिकार्कोऽल्पस्तेन गतिकलोत्पन्नपलोनौदयिकार्कभोग्यपलेन तात्कालिकार्कभोग्यपलं सममिति जातम् ( औरभोप—गउप ) =( तारभोप ) अत्रेदं सावनेष्टघटिकातो विशोध्यते तदा द्वितीयखण्डं धनं स्यादितिजातौ पक्षौ ( साइ + गउप—औरभोप ) =( साइ—तारभोप ) परञ्च गतिकलोत्पन्नपलयुतसावनेष्टपलं नाक्षत्रेष्टपलसममौदयिकार्कात्तात्कालिकार्कस्याधिकत्वादिति जातौ ( नाइ—औरभोप ) = ( साइ—तारभोप ) तेन सावनेष्ट घटिकातस्तात्कालिकार्कभोग्यपलं विशोध्यते तदौदयिकार्कभो-

ग्यपलोननान्नत्रेष्टपलमिति कृत भवति तेन तात्कालिकार्ककरण-
मुपपन्नम् । तथोक्तं सिद्धान्तशिरोमणौ श्रीभास्कराचार्यैः "ल-
ग्नार्थमिष्टघटिका यदि सावनास्तास्तात्कालिकार्ककरणेन भवे-
युरार्क्ष्यः। आर्क्ष्योदया हि सदृशीभ्य इहापनेयास्तात्कालिकत्वमथ
न क्रियते यदार्क्ष्यः॥ इति ननु सावनेष्टकल्पनादङ्गानयने तात्का-
लिकार्ककरणरूपं गुरुत्वम् । नाक्षत्रेष्टकल्पनात्तत्साधने तात्का-
लिकार्ककरणरूप लघुत्वम् । तर्हि कथं सर्वैः सांवत्सराचार्यैर्ल-
ग्नानयने सावनेष्टघटिका अङ्गीकृताः । यतो गुरुत्वं सर्वैस्त्या-
ज्यम् । तथोक्तं विष्णुदैवज्ञैः "यद्यक्रियालाघवमेव तन्त्रे तत्त-
द्गुरुत्वाय भवेत्कृतीनाम् । क्रियागुरुत्वान्नितरां लघुत्वमहो वि-
चित्रा गणितप्रसक्तिः" ॥ सत्यम् । तदुच्यते । अत्रैकदेशे गुरुल-
घवयोर्विचारणा न भवेत्किन्तु सर्वत्र तद्विचारः कर्त्तव्यः । तेन
सावनेष्टकल्पनात्केवलं लग्नानयने गुरुत्वं ग्रहच्छायानयने सप्तसु
स्थानेषु । लाघवं यतो भासाधनार्थं स्वस्वसावनमेवादितं ग्रा-
ह्यम् । नाक्षत्रेष्टघटीकल्पनाल्लग्नानयने लाघवं छायानयने सप्तसु
स्थानेषुसावनेष्टघटिकामानस्य नाक्षत्रीकरणरूपे गुरुत्वम् । तेन
बहुषु स्थानेषु लाघवदर्शनात्सर्वैः सावनेष्टघटिका एवाङ्गीकृताः।
अथ प्रस्तुतमुच्यते। अत्रार्कोदयादिष्टं यावदूर्ध्वाधरकालाभ्यां
सूर्याल्लग्नावधि क्षेत्रांशजस्वदेशोदयपलयोः क्रमोत्क्रमकलनया
साम्यादूर्ध्वाधरपलसम्बन्धेन भोगभुक्तलग्नानयनसमुचितमेव ।
अत्रोदयपलसाधने सम्पातादेव क्षेत्रोत्पादनं तेन सायनराशी-
नामुदयपलानि तन्त्रे पठितानि सन्त्यतः सायनार्कभोग्यभुक्त-

पलसाधनार्थमनुपातस्तद्यथा खाग्निभागैः सायनसूर्याक्रान्तराशिस्वदेशोदयपलानि तदा भोग्यभुक्तभागैः कानीति । फलं भोग्यभुक्तपलसमं यदा स्वस्वेष्टघटीभ्यो विशुद्धेत् तदाऽर्काधिष्ठितराशिर्लग्नं न स्यात् । तस्मात्क्रमोत्क्रमविधानेन गम्यगतराश्युदयपलानि विशुद्धेत्तदा शुद्धराशिरपिलग्नं नो तेन शेषमशुद्धराशिलग्नभुक्तभोग्यपलमिति वेदितव्यम् । तद्भागार्थमनुपातः । यद्यशुद्धराश्युदयपलैः खाग्निभागास्तदा शेषपलैः क इति । फलं क्रमलग्नानयने सम्पातरूपमेषादेरशुद्धभादिपर्यन्तं शुद्धराशिसङ्ख्यासु योजयेत् । विलोमविधाने तु लग्नभोग्यांशसमं फलं तन्मेषादेरशुद्धराश्यन्तावध्यशुद्धराशिसंख्याभ्योविशोधयेत् । तदा सम्पातरूपमेषादेर्भवृत्तकुजवृत्तैक्यं यावत्सायनाख्यलग्नं स्यात् । फलाऽऽशंसनार्थं तु पराशरगर्गवसिष्ठपुलिशकश्यपात्र्यादिमहर्षिवचनागमेन निरयणलग्नमपेक्षितमिति व्ययनं क्रियते । अन्यथा गणितागतनिरयणखेटे सायनलग्नसमेऽपि स लग्नस्थानस्थो न स्यात् । एवं सायनधनादिभावस्थोपि निरयणधनादिभावस्थो नेति निरयणलग्नादिभावयोगालोकजनितशुभाशुभफलकथनव्यवहारोच्छेदापत्तिः स्यादित्युपपन्नं लग्नानयनम् ।

## अथ दशमलग्नानयनवासना ॥

अत्र स्वयाम्योत्तरवृत्तं स्वपूर्वापरस्वस्तिकाख्यनिरक्षदेशीयखमध्याभिप्रायेण क्षितिजवृत्तं तथा दिवा रविखलग्नान्तर्गत-

क्षेत्रांशभवविषुवपलं नतकालपलेन समं तेन लङ्कोदयनतकालाभ्यां पूर्ववत्खलग्नानयनं भवितुमर्हति । तद्यथाऽर्कोदयाद्दिनार्धावधि सूर्यान्नतकालान्तरेणापरभागे खाङ्कमस्त्यतः पूर्वनते सूर्याद्विलोमप्रकारेण खाङ्कसाधनम् । अथ दिनदलादस्तकुजावध्यर्कान्नतकालान्तरेण पूर्वं खाङ्कस्थितत्वात्पराख्यनतेनार्कोत्क्रमेण खाङ्कसाधनं युक्तमिति । एवमस्ताख्यकुजान्निशार्धावधीष्टमानं चेत्तदा सषड्भार्क ऊर्ध्वयाम्योत्तरवृत्तात्पूर्वं रात्रिपूर्वनतेनास्ति भवृत्तयाम्योत्तरवृत्तैक्यद्वयस्य षड्भान्तरितत्वात् । तेन सषड्भार्कपूर्वनताभ्यामुत्क्रमेण खाङ्कानयनम् । एवं निशार्धात्पूर्वकुजावधीष्टमानं तदा सषड्भार्काद्रात्रिपराख्यनतकालेन पूर्वं खाङ्कमस्त्यतः सषड्भसूर्यपरनताभ्यां धनाख्यं खाङ्कसाधनं कार्यम् । अत्र पूर्वरीत्या व्ययनं कार्यमतस्तात्काल इत्यारभ्य दशमं भवेदित्यन्तं सर्वमुपपन्नम् ।



अथ कस्यचित्प्रश्नविशेषः ॥

दिवादलं निशादलं यदीष्टकालको भवेत् । तदा
नतं न सम्भवेत्कथं भवेत्खलग्नकम् ॥ १ ॥

मदुक्त एवास्य भङ्गः ॥

मध्याह्नकालोत्थरविः स्फुटो यस्तथा निशार्धोत्थरविः सषड्भः । खाङ्कं भवेत्तत्किलगोलरीत्या
सदेति चिन्त्यं गणकप्रवीणैः ॥ २ ॥

अत्र वासनाऽपि सुगमेति ॥

एतत्सम्बन्धार्थं मदुक्तः प्रश्नः ।

बुध गोलपटो प्रविलोक्य तनुं नतकालमृते वद मे खतनुम् । तव चेद्यदि गोलतरौ धिषणा वितता विलतावदलं निपुणा ॥ १ ॥

मदुक्त एवास्य भङ्गः ।

लग्नस्य मेषादिगतोदयेभ्यः खाभ्रग्रहाः सद्गुणकेन शोध्याः । ततश्च लङ्कोदयकाः क्रियाद्याः शेषं खरामैर्गुणितं विभक्तम् ॥ १ ॥ अशुद्धलङ्कोदयकैर्लवाद्यं युक्तञ्च मेषादिकशुद्धभैस्तत् । चलांशकोनं खतनुं भवेद्वै श्रीकृष्णदत्तो वदतीति युक्त्या ॥२॥

अत्रोपपत्तिः । लग्नगतनाडीवृत्तपृष्ठीयकेन्द्रप्रोतवृत्तनाडीवृत्तयोः सम्पाताच्चराग्राख्यात्पूर्वस्वस्तिकं यावल्लग्नचरपलम् । तदुत्तरगोले सम्पातरूपाजादेश्चराग्रं यावल्लग्ननिरक्षोदयपलेषूनं तदा सम्पातरूपमेषादेः पूर्वस्वस्तिकावधि लग्नस्वोदयपलमानम् । पूर्वस्वस्तिकाच्चराग्रस्याधः स्थितत्वात् । एवं याम्यगोले लग्ननिरक्षोदयपलेभ्यस्तच्चरपलं युतं तदा तत्स्वोदयपलमानं स्यात् । चराग्रस्य पूर्वस्वस्तिकादूर्ध्वगतत्वात् । नाडीवृत्ते पूर्वस्वस्तिकादूर्ध्वयाम्योत्तरवृत्तावधि पञ्चदशघटिकाः । तत्पलानि नवशतसमानि लग्नस्याजादिभुक्तस्वोदयपलेभ्यः

शोध्यानि तदा सम्पातरूपमेषादेर्निरक्षखस्वस्तिकावधि दशमलग्नस्य निरक्षोदयपलानि भवन्ति । तेभ्यो यदि मेषादिलङ्कोदयका विशोध्यास्तदा शेषं खलग्नभुक्तांशभवं निरक्षोदयपलम् । ततो लग्नवदनुपतनात्तद्भुक्तांशमानमानीयाजादिकशुद्धराशिषु तद्युतं तदा खलग्नं स्यात् । अत्रेदमवधेयम् । यदि लग्नस्य मेषादिकस्वोदयभुक्तपलेभ्यो नवशतपलानि न शुद्धानि तदा षट्त्रिंशच्छतयुतलग्नोदयपलेभ्यस्तानि शोध्यानीति सुस्पष्टं ज्योतिर्विदाम् । तेनोपपन्नं सर्वम् ॥

**अथ प्रकारान्तरेण मदुक्त एवास्य भङ्गः । अस्ताख्यलग्नं प्रविकल्प्य भानुं तस्माद्दिनार्धं प्रविधाय नूनम् । ताभ्यां निरक्षोदयकैः प्रसाध्यं धनाख्यलग्नोक्तवदेव साध्यम् ॥ १ ॥**



अत्रोपपत्तिः । सषड्भं लग्नं सप्तमलग्नं स्यात् । क्षितिजभवृत्तसम्पातस्य षड्भान्तरितत्वात् । अस्तलग्नादग्रे सप्तमलग्नोर्ध्वयाम्योत्तरवृत्तान्तर्गतेनास्तलग्नदिनार्धसमेष्टसमयेन खतनुं वर्त्तते तेनास्तलग्नतद्दिनदलेष्टाभ्यां लङ्कोदयवशाल्लग्नसाधनवद्वोऽग्यप्रकारेण दशमलग्नानयनं भवितुमर्हतीत्युपपन्नं सर्वम् ॥

**अथ पुनः प्रकारान्तरेणास्य मदुक्तभङ्गः । लग्नं प्रकल्प्येनमतो निशार्धं ताभ्यां च लङ्कोदयकैः क्रमेण । लग्नं च लग्नोक्तवदेव साध्यं सषड्भकं तद्भवतीह साध्यम् ॥ १ ॥**

अत्र वासना । लग्नादग्रेलग्नाग्रयोरयोत्तवृत्तान्तर्गतलग्नरात्रिदलेन चतुर्थलग्नं वर्त्तते । अतस्ताभ्यां धनाख्यलग्नसाधनवच्चतुर्थलग्नं यत्तत्सषड्भं खतनुं स्यात् । अत्रेदमवधेयम् । लग्नज्ञानात्तच्चरज्ञानं सुलभमेवातो गालक्रमेण चरपलानयुतपञ्चदशघटिकास्तनोर्निशार्धं यत्तदेवास्तलग्नस्य दिनार्धं बोध्यम् । लग्नसप्तमयोर्भुजांशसमत्वात्तथा भिन्नगोलत्वाच्च । अतः सर्वन्निरवद्यम् ॥

## ( तं १ ) सषड्भं लग्नखे जायातुर्यावित्यादि ( ४ )

अत्रोपपत्तिः । महद्वृत्तैक्ययुग्मं षड्भान्तरितं भवेदस्य युक्तिर्मदुक्तगोलीयरेखागणितसुधीरञ्जनीसमाख्यटीकायां द्रष्टव्या तेन सषड्भे लग्नखे सप्तमचतुर्थलग्ने तूपपन्ने । अत्र लग्नाच्चतुर्थलग्नं यावत्तथा चतुर्थात्सप्तमावधि तथाऽस्ताद्दशमाङ्कं यावत्तथा दशमात्प्रथमाङ्कावधि भवृत्तप्रदेशानां कृताः समास्त्रयो विभागा ये त एव तावत्सामान्यतो धनाधिभावाः श्रीपत्यादिपद्धतिकारैः स्वीकृतास्तथा चरमविकलात्मकभावयोरन्तर्गतभवृत्तप्रदेशार्धं त्र्यंशार्धमिति यावत् पूर्वभावचरमविकलाग्राद्यावतान्तरेणास्ति तदेव पूर्वभावस्य विरामसन्धिरपरभावस्यारम्भाख्यसन्धिरिति स्वीकृतं यतो भावचरमविकलातुल्ये खेटे भावफलं पूर्णं ततः फलापचयात्पूर्वकथितभवृत्तप्रदेशार्धबिन्दौ पूर्वभावफलं शून्यमेव तस्मादग्रिमभावफलोपचयवशेनाग्रिमभावचरमविकलाबिन्दौ तद्भावफलं पूर्णं ततः फलापचयात्त्र्यंशा-

र्धबिन्दौ तद्भावफलं शून्यमेव तथोक्तं श्रीपतिपद्धतौ "भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फलं भावसमांशकेषु । ह्रासः क्रमाद्भावविरामकाले फलस्य नाशः कथितो मुनीन्द्रैः !! तेन फलप्रवृत्तिस्थानात्फलाभावावधि तद्भावसम्बन्धवशेन भावचरमविकलाग्रात्पूर्वापरं त्र्यंशार्धान्तरेणारम्भविरामसन्धिद्वयचरमस्थानं तथा त्र्यंशार्धाद् भावचरमविकलावधि मुख्यभाव इति वेदितव्यम् । अथ पूर्वकथितरीत्या लग्नोनतुर्याग्निभागसमं लग्नधनभावयोर्धनसहजयोस्तथासहजचतुर्थयोरन्तरमिदं $\frac{(\text{च}-\text{ल})}{\text{३}}$ तेनास्यार्धमर्थाल्लग्नचतुर्थान्तरषष्ठांशमिदम् $\frac{(\text{च}-\text{ल})}{\text{६}}$ लग्नभावविरामसन्ध्योस्तथा धनारम्भसन्धिस्वभावयोस्तथा धनभावविरामसन्ध्योस्तथा सहजारम्भसन्धिभावयोस्तथा सहजभावविरामसन्ध्योस्तथा चतुर्थारम्भसन्धिभावयोरन्तरसमं स्यात्तेनेदं लग्ने योज्यं तदा लग्नसन्धिः स्यादेवं तत्तद्भावसन्धिषु तद्योजनादङ्गादिससन्धिभावत्रयानयनमुपपन्नम् । अथाङ्गात्सप्तमावधि षड्राशिस्तेनाङ्गचतुर्थान्तरोनषड्राशिश्चतुर्थसप्तमान्तरंजातम् $[\text{६}-(\text{च}-\text{ल})]=(\text{स}-\text{च})$ अस्य षष्ठांशेनानेन $\frac{[\text{१}-(\text{च}-\text{ल})]}{\text{६}}$ पूर्वरीत्या चतुर्थादिभावविरामसन्धीनामन्तरं तेनास्य योजनाद्बन्ध्वादिससन्धिषु भावेषु चतुर्थादिससन्धिभावत्रयानयनमुपपन्नम् । अथाङ्गात्सप्तमावधि षड्राशिस्तथा चतुर्थाद्दशमावधि च षड्राशिराभ्यां चतुर्थसप्तमान्तरसममुभय-

निष्टखण्डं विशोध्यते तदा लग्नचतुर्थान्तरं सप्तमदशमान्तरं सिद्धमस्मादेतयोस्त्र्यंशावपि समावेव । यथा लग्नाल्लग्नचतुर्थान्तरत्र्यंशाग्रे धनभावस्तथा सप्तमात्सप्तमदशमान्तराग्निभागाग्रे मृत्युभावस्तेन धनभावषड्भान्तरे मृत्युभाव इति बोध्यम् । एवं षष्ठांशयोः समत्वादङ्गविरामसन्धेर्जायाविरामाख्यसन्धिः षड्भान्तरित इत्येवमग्रेपि बोध्यमतो भार्धयुक्ताः परेपि षडित्युपपन्नम् । अत्रेदमवधेयम् । यदि खेटो भावादूनस्तदारम्भसन्धिः खेटाद्भावाच्च शोध्यः । यद्यधिकस्तदा खेटो भावश्च विरामसन्धेः शोध्यः । यदि शोध्यं न शुद्धेत्तदा शोधके द्वादशराशयोऽधिका ग्राह्यास्ततोनुपातस्तद्यथा भावसन्ध्यन्तरसमग्रहसन्ध्यन्तरेण पूर्णं विंशतिसमं विंशोपकाख्यं भावजबलं लभ्यते तदेष्टग्रहसन्ध्यन्तरेण किमित्युपपन्नं सर्वम् ।

## ( तं १ ) भुक्तं भोग्यं स्वेष्टकालादित्यादि ( ४ )

अत्रोपपत्तिः । लग्नात्प्रागपरे लग्नराशौ यदा रविः स्यात्तदैवार्कभुक्तभोग्यकालाभ्यामिष्टकालो न्यूनो रविलग्नान्तर्गतक्षेत्रांशस्य रविभुक्तभोग्यभागाल्पत्वात् । अस्मादत्रैव लक्षणेऽभीष्टकालाद्भुक्तं भोग्यं न शुद्ध्यतीति पूर्वानयनं विहायान्यथा यतितव्यम् । लग्नादधिकोनरवौ सावनेष्टनाडीपलजनितक्षेत्रांशैर्लग्नार्कान्तरांशसमैरूनयुक्ते सति लग्नं भवति । तत्र सावनेष्टघटीपलभवक्षेत्रांशसाधनार्थमनुपातः । ग्रहोदयपलमानेन खाग्निभागास्तदेष्टनाडीपलैः किमिति जातम् ( ३० इप ) तनोरुपलक्ष-

णत्वात्खलग्नसाधनेप्ययं विशेषो विधेयः । अथ रात्रौ लग्नानयने विशेषोऽभिधीयते । रव्युदयान्निशीष्टकालावधि स्वेष्टघटीमानाधिकत्वात्पूर्ववत्क्रमलग्नानयने तथा रात्रिशेषस्यापि महत्त्वादुत्क्रमलग्नानयने महद्ग्रहोदयवियोजनरूपगौरवदोषापत्तिः स्यात्तेनात्र रात्रिगतेष्टकालसाङ्गभार्काभ्यां क्रमलग्नानयने लाघवेन भवितुमर्हति केवलार्कास्तलग्नान्तरजनितरात्रिगतकालस्य साङ्गभार्काङ्गान्तरक्षेत्रांशजग्रहोदयकालसमत्वात् । अत्रेदमवधेयम् । दिनावशेषेपि दिनावशेषकालसाङ्गभार्काभ्यां विलोमाख्यलग्नानयने लाघवं स्यात्तेन रात्रावित्युपलक्षणमुक्तम् । अत्र सूर्योदयाद्दिनार्धं यावद्दिनगतार्काभ्यां भोग्यप्रकारेण । दिनार्धादस्तावधि दिनशेषसषड्भार्काभ्यां भुक्तप्रकारेण । अस्तान्निशार्धावधि रात्रिगतसषड्भार्काभ्यां भोग्यप्रकारेण । निशार्धात्सूर्योदयावधि रात्रिशेषार्काभ्यां भुक्तप्रकारेण । लाघवाल्लग्नानयनं विधेयम् । बलभद्रगणकोक्तमेतद्वासनासिद्धपद्यम् ।

**सूर्योदयाद्यातघटीषु भोग्यैर्दिवावशेषे रसभार्कभुक्तैः । निशागतेत्वङ्गयुतार्कभोग्यैर्निशावशेषे रविभुक्तभागैः ॥**

**( तं १ ) तत्समं नीचमनेनेत्यादि ( २ )**

अत्र युक्तिः । उच्चसमे खेटे परमं बलं विंशतिसमं "विंशतिरात्मतुङ्ग इत्यादिवचनात्" नीचसमे खमिष्टेऽनुपातस्तद्यथा यदि नीचखेटान्तराभ्राष्टेन्दुभागैर्विंशतिसमं

रूपं बलं लभ्यते तदेष्टनीचखेटविवरांशैः किमिति जातम् ( २० अं ) / १८० अत्र गुणहरौ विंशत्यापवर्त्य जातम् ( अं ) / ६ परश्चो-च्चादग्रे खेटे खेटोननीचमपेक्षितं खेटान्नीचावधि बलसत्त्वात् । तेन नीचात्खेटावधि यदन्तरं रसभाधिकं तद्यदि चक्राद्विशोध्यते तदावशेषं ग्रहोननीचसमं स्यात्तेनोपपन्नं सर्वम् ।

## ( तं १ ) लवीकृतो व्योमचर इत्यादि ।

अत्र वासना । प्रत्येकराशौ ग्रन्थकृता षष्ठांशादिविभागाः स्वीकृतास्ततोऽनुपातः । खाग्निभागैः षष्ठांशादिविभागा लभ्यन्ते तदा लवीकृतखेटैः क इति खेटलवाः पृथक् पृथक् रसादि-गुणकैर्गुणिताः खाग्निभक्ताः फलमिता गता रसांशादयो बोध्या-स्तथा वर्त्तमानरसांशादिबोधार्थं कुयुता इति विहितम् ।

द्वादशांशास्त्वर्थत एव सिद्धास्तस्मान्नोक्ताः । राशीनां क्रमगणनाभिधानादङ्गांशादयोऽपि क्रमगणनया कर्त्तव्या विशेषाविहितत्वादिति क्रियादिविहितं तेनोपपन्नं सर्वम् ।

## ( तं १ ) अपाश्यपश्यन्निजदृश्यखेटादिति ( ११ )

अत्रोपपत्तिः । अत्रत्यदृष्टिः स्यान्नवपञ्चमे बलवतीत्यादि पद्यद्वयानुसारेण व्यवहारार्थाजादिराशौ यत्सङ्ख्यकभागाद्यवयवे द्रष्टृग्रहस्तत एकादिस्थाने तत्सङ्ख्यकभागाद्यवयवे दृश्यखेटस्थिते विहितदृष्टिः स्याद्यथा द्विराश्यादौ खं त्रिभादौ चत्वारिंशत्कलात्मिका दृष्टिः परं य एव द्विभादिः स एवैक-

भान्त स्तथा य एव त्रिभाद्यः स एव द्विभान्त एवं क्रमेण ध्रुवाख्या दृष्टिकलाः पठिता इति चक्रदर्शनम् ।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ०० | ४० | १५ | ४५ | ०० | ६० | ०० | ४५ | १५ | १० | ० | ६० |

द्रष्टृग्रहापेक्षया कियतान्तरेणाग्रे दृश्यग्रहो वर्त्तत इति बोधार्थं द्रष्टृग्रहेणोनो दृश्यखेटः क्रियते। तत्रैकादिभे शेषे गता ध्रुवदृष्टिलिप्ताः । भागसम्बन्धिदृष्टिसाधनार्थमनुपातस्तद्यथा यदि खरामांशैर्यातैष्यध्रुवान्तरमुपचयापचयात्मकं लभ्यते तदेष्टांशैः किमिति फलं गतखण्डादधिकोनैष्यखण्डक्रमेण गतध्रुवे धनर्णमित्युपपन्नं सर्वम् ।

## (तं १) स्वनाथहीनं सहममित्यादि ( १४ )

अत्र युक्तिः । अत्र स्वभावतः स्वनाथोनसहमभवदिवसैः स्वस्वामिदशारम्भसमयात्सहमफलपाको भवतीति तदन्तरोत्थसौरदिनसाधनार्थमनुपातः । खरामभागैस्तत्सहमाधिष्ठित गृहोदयपलानि तदा स्वनाथोनसहमभागैः किमिति फलस्वरूपम् [ सउ × अंभा / ३० ] विषुवांशार्थमनुपातस्तद्यथा यदि दिग्मितपलैर्नाडीवृत्तीयरूपभागस्तदा पूर्वसाधितपलैः किमिति फलानि तदन्तरोत्थविषुवांशा इति जातम् [ सउ × अंभा / ३०० ] एतेन "खाभ्राग्नितुल्यश्च तदन्तरं वै यदा तदा भोदयमानमत्र । तदङ्कतुल्यं हि भवेद्दशायां मानं सदा तत्सहमस्य चेत्थम् ।" इति

ताजिकसारोक्तमुपपन्नं भवेत् । अथ पुनरनुपातस्तद्यथा रूपविषुवांशेन रूपं सौरदिनं तदा पूर्वानीतविषुवांशैः किमिति फलानि सौरदिनानीति जातम् $\frac{(\text{सउ} \times \text{अंभा})}{300} = (\text{सौदि})$ परञ्चेदं महत्स्थूलं यतः सहमनाथसहमविवरालोदयपलानां सहमाधिष्ठितगृहोदयपलसमत्वात्कथमपि सहमाधिष्ठितगृहोदयपलैरनुपाताद्विषुवपलसाधनं न भवितुमर्हति तथा नाडीवृत्तीयैकैकांशवृद्धावेकैकसौरदिनवृद्ध्यभावाद्विषुवांशेभ्यः सौरदिनानयनमप्यनर्हमिति वेदितव्यं तेनोपपन्नं व्यवहारार्थं सर्वम् ।

## ( तं २ ) गताः समा पादयुता इति ( ३ )

अत्रोपपत्तिः । अत्र "वर्षायनर्तुयुगपूर्वकमत्रसौरादिति भास्करीयपद्यबलेन " सौरवर्षस्यैव मुख्यताऽतोजन्मसमयो प्रथमवर्षारम्भ एव तत एकादिसौरवर्षावसानसमये द्वितीयादिवर्षारम्भः परं तदारम्भः कतिमितदिनाद्यवयवे वर्षप्रवेशवाराद्यभिधाने तदर्थमुपायः । तत्रार्कमतानुसारेण युगसौराब्दाः ( ४३२०००० ) युगसावनदिवसाश्च ( १५७७९१७८२८ ) अत्रानुपतनादेकवर्षे सावनदिनाद्यम् ( ३६५ । १५ । ३१ । ३१ । २४ । अत्र ग्रन्थकारेण गुणनलाघवार्थं स्वल्पान्तरादेतन्मितं ३६५ । १५ । ३१ । ३० स्वीकृतम् । अत्र दिनानां सप्ताधिकप्रयोजनाभावात्सप्ततष्टे जातम् १ । १५ । ३१ । ३० । यद्येकवर्षेणैतावद्दिनाद्यं तदा गतवर्षैः किमिति फलं दिनाद्यम् । तत्राद्यस्थाने रूपगुणकत्वाद्गतवर्षसमं द्वितीयस्थाने गतवर्षचतुर्थांशसमदिनं

यतः पञ्चदशघटिका एकदिनचतुर्थांशः। अनयोः समानजातित्वाद्योगस्वरूपम् ( $\frac{\text{गव + गव}}{\text{४}}$ ) तृतीयस्थाने कुरामगुणितगतवर्षं पलात्मकरूपम् ( गव ३१ ) अन्त्यस्थाने खरामगुणितगतवर्षं विपलात्मकम् ( गव ३० ) तत्पलात्मककरणाय षष्टिभक्तम् ( $\frac{\text{गव ३०}}{\text{६०}}$ ) गुणकेनापवर्त्य जातम् ( $\frac{\text{गव}}{\text{२}}$ ) पलात्मकफलयोर्योगार्थंन्यासः ( $\frac{\text{गव ३१ + गव}}{\text{२}}$ ) समच्छेदविधिना योगस्वरूपमिदम् ( $\frac{\text{गव ६३}}{\text{२}}$ ) घटीकरणाय षष्टिभक्तं जातम् ( $\frac{\text{गव ६३}}{\text{१२०}}$ ) अत्रापि गुणहरौ त्रिभिरपवर्त्य जातम्। ( $\frac{\text{गव २१}}{\text{४०}}$ ) पर जन्मसमयादग्रे लब्धदिनाद्यं यदि जन्मवाराद्येनयुतं तदा सृष्ट्यादेरभीष्टवर्षारम्भं यावद्यः सावयवः सावनाहर्गणस्तत्र सप्ततष्टे वर्ष प्रवेशवारादिः स्यादत्र जन्मवारादिवारस्य वर्त्तमानत्वात्स वारो वर्त्तमानो बोध्यस्तेनोपपन्नं सर्वम्।

## ( तं २ ) शिवघ्नोब्द इत्यादि ( ४ )

अत्र वासना। यदि सौरोक्तयुगसौरवर्षैरेतैः ( १६०३०००० ८० ) तत्रत्ययुगचान्द्राहा लभ्यन्ते तदैकेन सौरवर्षेण किमित्यनुपतनादेकसौरवर्षभवं चान्द्रदिवसाद्यम् ३७१।३।५३।२४। तिथेरपेक्षितत्वात्प्रथमस्थाने खाग्निशेषिते जातम् ११।३।५३। २४। यद्येकसौरवर्षेणैतावच्चान्द्राहाद्यं तदा गतवर्षैः किमित्यनु-

पतनादाद्यस्थाने गतवर्षाणामेकादशगुणस्तथाऽधोवयवेन सवर्णितेनैकादशतिथयो यावद्भ्रियते तावत्खाद्रीन्दुसमं लभ्यते तत एकादशघ्नं गतवर्षं खनगचन्द्रभक्तं फलं तिथ्यात्मकं पूर्वानीतफले योज्यमिति जातम् $\left(\frac{\text{गव ११ + गव ११}}{\text{१७०}}\right)$ परञ्चेदं फलं जन्मकालिकतिथ्यग्रादागतमपेक्षितं तु शुक्लप्रतिपदादितस्तेन जन्मतिथियुतं तथा तिथीनां खरामाल्पकत्वात्खाग्निशेषितमित्युपपन्नं सर्वम् ।

## ॥ अथ प्रसङ्गात्ताजिकसारोक्तपद्यम् ॥

**व्योमेन्दुभिः सङ्गुणिता गताब्दाः खशून्यवेदाश्विलवैर्विहीनाः । जन्मर्क्षयोगैः सहिताः पृथक्स्था नक्षत्रयोगौ भवतो भतष्टाः ॥ १ ॥**

अत्रोपपत्तिः । यदि युगसौरवर्षैरेतै सौरोक्तयुगचान्द्रभगणाः (५७७५३३३६) लभ्यन्ते तदैकेन वर्षेण किमिति फलं त्रयोदशभगणास्ते प्रयोजनाभावात्त्याज्याः शेषभवनक्षत्रसाधनार्थमनुपातस्तद्यथा यद्येकभगणेन सप्तविंशतिनक्षत्राणि तदा भगणशेषेनानेन $\left(\frac{\text{१५६३३३६}}{\text{४३२००००}}\right)$ किमित्यत्रानेन (२७) हरभाज्यावपवर्त्य जातम् $\left(\frac{\text{१५६३३३६}}{\text{१६००००}}\right)$ अत्रेदं फलविशेषाभावादनेन $\frac{\text{६६६४}}{\text{१६००००}}$ युतोनितंजातम् $\left(\frac{\text{१६००००-६६६४}}{\text{१६००००}}\right)$ अथास्य रूपा-

न्तरे कृते जातम् $\frac{(\text{१०-६६६५})}{\text{१६००००}}$ अत्र स्वल्पान्तरत्वाद्द्वितीय-खण्डस्थभाज्यहारावेतेना ( ६६६ ) पवर्त्य जातम् $\left[\frac{\text{१०-१०}}{\text{२४०}}\right]$ यद्येकवर्षेणैतानि भानि तदा गतवर्षैः कानीति जातम् $\left(\frac{\text{गव १०-गव १०}}{\text{२४०}}\right)$ एवं रविचन्द्रगतियोगवशाद्योगा उत्पद्यन्ते तेन यदि युगसौरवर्षैस्तत्रत्यरविचन्द्रभगणयोगोऽयम् [रभ + चभ] लभ्यते तदा रूपेण किमिति जातम् $\left(\frac{\text{रभ + चभ}}{\text{युसौ}}\right)$ परं युगसौरवर्षाणां रविभगणसमत्वादाद्ये रूपं फलं द्वितीयस्थाने नक्षत्रभगणसमं फलं शेषमपि नक्षत्रशेषसमं तेन केवलचन्द्रभगणादनुपातेन नक्षत्रवद्योगानयनं भवितुमर्हति । शेषवासना तिथिवद्वगम्येत्युपपन्नं सर्वम् ।

## ( नं २ ) दिगघ्नोऽब्दोऽशिवरहित इत्यादि ( १२ )

अत्र युक्तिः । अत्र “ खाभ्रखाभ्रगगनामरेन्द्रियक्ष्माधराद्रिविषयाहिमद्युतेः’ इत्यादि भास्करीयपद्यबलेनानुपातस्तद्यथा कल्पसौरवर्षैः ( १५५५२०००००००० ) कल्पचान्द्रभगणास्तदा रूपेण किमिति जातम् $\left(\frac{\text{१ × ५७७५३३०००००}}{\text{१५५५२०००००००००}}\right)$ चान्द्रभगणाद्याः । १३ । ६ । ५८ । अत्रापि भगणस्य प्रयोजनाभावाच्छेषेणानुपातः । एकवर्षेणैतावत्फलं । ६ । ५२ । तदा गतवर्षैः किमिति

रूपम् १ । ५८ गव तद्द्वाभ्यां युतोनितं फलविशेषाभावाज्ञातम् (१०-२) गव = [ गव १०-गव २ ] अत्रापि तत्पूर्ववत्सप्तविंशतिगुणं तदा भवृन्दं स्यात्परञ्च सप्तविंशत्यधिकप्रयोजनाभावाच्चन्द्रभगणशेषादेव नक्षत्रवद्योगानयनवासना पूर्वविहितैवेति वेदितव्यं तेनापपन्नं सर्वम् ।

## ( तं २ ) तत्कालेर्को जन्मकालरविणेत्यादि ( ५ )

अत्र युक्तिः । "रवेश्चक्रभोगोर्कवर्षं प्रदिष्टमिति" श्रीभास्कराचार्योक्तपद्येन जन्मसमयात्प्रतिसौरवर्षावसाने भगणपूर्त्तिज्ञापकाज्जन्मार्कसमो वर्षारम्भार्को भवत्येव । अहो निर्णीतवर्षारम्भसमयस्यानुपातागतत्वात्तत्र मध्यमरविभगणपूर्त्तिर्भवति स्फुटार्कस्य नेति बोध्यम् । तेन प्रतिवर्षारम्भकालिकमध्यार्कसमो जन्मकालिकमध्यार्को भवितुमर्हति । न च कालद्वयजातस्फुटार्कौ समावित्याचार्योक्तमसदिवप्रतिभाति । सत्यम् । तदुच्यते । वर्षावसाने यावन्ति स्फुटसावनानि तावन्त्येव मध्यमानि स्युः । गतोनामुदयानाञ्चापचयोपचययोः समत्वात् । तेन मध्यस्फुटार्कभगणभोगकालयोस्तत्र समत्वं जातमतः कालद्वयजातौ स्फुटार्कौ मिथः समावित्युपपन्नम् । अथानुपातेन मध्यमा एव तिथिनक्षत्रयोगा आगताः पञ्चाङ्गे तु स्फुटतिथिनक्षत्रयोगानां व्यवहारस्तेन यदि मध्यस्फुटमानाभ्यामानीततिथ्यादिकमेकमेव तदैव तिथ्यादीनां नियमस्तदन्यथा सान्तरमतः सर्व्वमुपपन्नम् ।

तथोक्तं सुधानिधौ ।

निश्चयोऽत्र सदा ज्ञेयो वारात्सर्वत्र हायने ।
तिथेर्भयोगतोज्ञेयमनुमानं भयोगयोः ॥

अत्रोपपत्तिः सुगमा विहिता चेति बोध्यम् ।

## ( तं२ ) प्रत्यहं शरलिप्ताभिरित्यादि ( ४६ )

अत्र युक्तिः । स्वजन्मलग्नात्प्रतिवर्षमित्यादि मूलकारोक्तपद्यागमप्रमाणेन जन्मसमये जन्मलग्नमेव मुथहेति नामनिर्देशादेकैकगतवर्षसत्वेनैकैकराशिवृद्धया मुथहाव्यवहारस्तेनार्कसमगतवर्षे पुनर्जन्मलग्ने मुथहा स्यादतो द्वादशाल्पगतवर्षसमराशियुतं जन्मलग्नं मुथहागृहादिकं तेन रवितष्टजातशरद्युतमित्युपपन्नम् । अथ मासप्रवेशार्थं तदानयनं यदि द्वादशसौरमासैः खरामभागास्तदैकेन सौरमासेन किमिति फलं सार्धमंशद्वयम् । २ । ३० । अथ दिनवेशार्थं तज्ज्ञानमुच्यते । खाग्निसौरदिनैः सार्धमंशद्वयोत्थकलाः खबाणचन्द्रमितास्तदा रूपसौरदिनेन का इति जाताः पञ्चकलास्तेनोपपन्नं सर्वम् ॥

## ( तं २ ) स्पष्टान् सलग्नानित्यादि ( १ )

अत्र युक्तिः । गतराशिसम्बन्धिन्यो दशा व्यतीतास्तेन राशीन्विहाय भुज्यमानराशिभागदशानयनमुच्यते । यः खेटो यथा यथा राशिसमीपभागस्थस्तथा तथा तस्य महत्फलदातृत्वमस्ति । यथा यथा राशिदूरांशस्थस्तथा तथा तस्य लघुफलदातृत्वं वर्त्तते । किन्तु पूर्वखेटापेक्षया किञ्चिन्न्यूनमि-

ति नारदकश्यपोक्तिः " आदौ सम्पूर्णफलदं मध्ये मध्यफलप्रदं। अन्ते तुच्छफलं लग्नं सर्वस्मिन्नेव मेवहि॥ एतेन हीनांशस्थापनं युक्तियुक्तं जातम्। अथाद्यहीनांशभवदशाग्रात्कतिकालावधि तदधिकखेटदशामानं स्यात्। तदर्थमाद्यहीनांशोनस्तदधिकांशो विहितस्तेन पात्यंशकरणमुपपन्नम्। अथ सर्वाधिकांशैः सौरात्मकवर्षमितिर्लभ्यते तदा रूपभागेन किमिति फलस्य ध्रुवाङ्काः संज्ञाः कृतास्ततोऽनुपातस्तद्यथा यद्येकेनांशेन ध्रुवाङ्कास्तदा स्वस्वपात्यंशैः किमिति फलं दिनाद्यं दशामानं तेनोपपन्नं सर्वम्॥

## ( तं २ ) दशामानमित्यादि ( ४६ )

अत्र युक्तिः। यस्य ग्रहस्य दशायामन्तर्दशामानमभीष्टं तदा तद्दशामानं प्रकल्प्यानुपातः। सर्वाधिकांशैस्तद्दशामानं लभ्यते तदैकांशेन किमिति फलं ध्रुवाङ्काः। पुनरनुपातः। एकांशेन ध्रुवाङ्कास्तदा स्वस्वपात्यंशैः किमिति फलं दिनाद्यमन्तर्दशामानम्। एवमन्तर्दशामानं समामानं प्रकल्प्य पूर्ववद्विदशादिमानमनुक्तमपि बोध्यमित्युपपन्नं सर्वम्।

## ( तं २ ) एकैकराशिवृद्धयेत्यादि ( ५५ )

अत्र युक्तिः। अत्र मासैर्द्वादशभिर्वर्षमिति सौरोक्तेन सूर्यांशसाम्यनियमात्सौरमानेन मासप्रवेशः स्यात्। ननु मासप्रवेशे चान्द्रमासस्यैव मुख्यता स्यात् " मासास्तथा च तिथयस्तुहिनांशुमानात्। इति सौरमासस्य गौडत्वम्। सत्यम्। तदुच्यते।

सौरात्मकमासप्रवेशनियमजनकाभावादधिमासलक्षणे तु त्रयोदशमासप्रवेशसमयनिर्णयजनितगौरवदोषापत्तिः स्यात् । एवं सौरांशवृद्ध्या कलादिसाम्ये सौरात्मकदिनप्रवेशो बोध्यस्तेनोक्तमेव तथ्यम् ।

## ( तं २ ) मासार्कस्य तदासन्नपङ्क्त्यर्कोणे त्यादि (१)

अत्र युक्तिः । प्रथममासप्रवेशस्तु वर्षप्रवेश एव जातः । तत्र जन्मार्कसम एवार्को वर्त्तते । चेद्द्वितीयादिमासप्रवेशोऽभीष्टस्तदैकैकराशियोगेन यो मासप्रवेशार्को यस्मिन् दिने जातस्तद्दिनस्य समीपगाऽर्थात्सार्धत्रयदिनात्मिका या पङ्क्तिस्तत्पङ्क्तिस्थार्कमासवेशार्कयोरन्तरं कलादिकं कार्यमतोऽनुपातस्तद्यथा पङ्क्तिस्थार्कगतिकलाभिरेकं दिनं तदा विवरकलाभिः किमिति फलं दिनादिकं पङ्क्त्यां युतोनं विधेयं पङ्क्तिस्थार्कान्मासार्काधिकहीनके तद्वारादौ मासप्रवेशो भवति । एवं दिनप्रवेशश्चेत्क्रियते । तदैकांशयोजनेन कलादिसमो यस्मिन् दिने दिनवेशार्को जातस्तद्दिनासन्नपङ्क्तिस्थार्कदिनवेशार्कयोरन्तरं कलादिकं पूर्ववज्जवेन भक्तं यत्फलं पङ्क्त्यां तद्युतोनं कार्यं पङ्क्तिस्थार्काद्दिनार्के ऽधिकहीनके तद्वारादौ दिनवेशोभवत्यन्यत्सर्वं वर्षवेशोक्तवद्बोध्यमत उपपन्नं सर्वम् ॥

## ( तं ) भूपश्चचन्द्रकुगुणा इत्यादि ।

अत्रयुक्तिः । पूर्वरीत्यैकवर्षेदिनाद्यम् १ । १५ । ३१ । ३० । २४ । अत्र रामविनोदाख्यग्रन्थारम्भशाके ( १५१२ ) सिद्धा-

न्तरीत्या कल्पगतवर्षवृन्दादानीतदिनाद्यम् [ ० । २४ । १३ ।
तेन रामविनोदारम्भशकादिष्टशकावधि गतसमा एकवर्षभव-
दिनादिकेन पृथक् पृथक् गुणितास्तत्र स्वक्षेपयुताः सप्तभक्ताः
शेषं रव्यब्दान्ते वर्षाधिपः स्यादित्युपपन्नं सर्वम् ॥

## ( तं २ ) अथ विहायराशिश्चन्द्रस्य भागा इत्यादि ( ३१ )

अत्र युक्तिः । तत्र मेषादिगतराशिभवावस्थानां गतानां प्रयो-
जनाभावाद्गतराशीन्विहाय वर्त्तमानराशिभागजनितावस्थान-
यनार्थमनुपातः । खरामांशैः प्रवासाद्यर्कमितावस्थास्तदेष्टांशैः
का इति जातम् ( १२ इअं ) / ३० गुणहरौ रसेनापवर्त्य जातम्
( इअं २ ) / ५ तेनोक्तमेव समीचीनम् ॥



**जातकक्रोडनाम्न्यत्र शास्त्रेऽमले नीलकण्ठोक्त-
शास्त्रप्रजाताऽमला । दुष्टचित्तावलेपावलीभञ्जनी
वासना कृष्णदत्तार्चिताऽगात्वलम् ॥ ❀ । ❀ ॥ ❀**

**अथ सङ्ग्रहपद्यभवाममलामुपपत्तिमहं प्रवदामि
धिया । बुधमोदकरीं प्रतिपत्तिकरीं नितरां खलद-
र्पविनाशकरीम् ॥**

तत्रादौ छायादर्शनादिष्टकालानयने कस्यचित्पद्यम् ।

**रामाङ्गुलीकृता छाया छाया रामेण संयुता ।**
**चतुष्षष्टिं हरेद्भागं लब्धं नाडी ततः पलम् ॥**

अत्रोपपत्तिः । यस्मिन्दिने षोडशघटिकासमदिनार्धसमसुन्नतकालमानं भवेत्तत्र मापनेन दिनार्धजाभा रूपाङ्गुला दृष्टा । तत्र भाशङ्कुयोगो भुजकोटियोगाख्यो वेदमित एवानुपातः । वेदमितेन छायाशङ्कुयोगेन षोडशघटिकासममुन्नतकालमानं तदेष्टभाशङ्कुयोगेन किमित्यत्रेच्छावृद्धौ फले ह्रास इत्यादिना व्यस्तत्रैराशिकेन जातमुन्नतम् $\left(\frac{१६ \times ४}{\text{यो}}\right) = \left(\frac{६४}{\text{यो}}\right)$ तेनोपपन्नं सर्वम् ॥ अथान्यथोच्यते । क्षितिजासन्ने भाधिकत्वादेकदण्डोन्नतकाले मापनेनैकषष्टिमिता भा दृष्टाऽस्ति तत्र भाशङ्कुयोगश्चतुष्षष्टिमितस्ततोनुपातः । चतुष्षष्टिमितेन भाशङ्कुयोगेनैकदण्डोन्नतकालस्तदेष्टभानरयोगेन क इत्यत्रापीच्छाह्रासे फले वृद्धिरित्यादिना व्यस्तत्रैराशिकेन जातं घटीमानम् $\left(\frac{६४}{\text{यो}}\right)$ शेषं षष्ट्यासङ्गुण्य योगेन विभज्य फलं पलं तेनोपपन्नं सर्वम् ॥

**अथ भादर्शनात्स्थूलकालानयने कस्यचित्पद्यम् ॥**

**छायापादरसोपेतैरेकविंशशतं भजेत् । लब्धाङ्के घटिका ज्ञेयाः शेषाङ्केभ्यः पलं स्मृतम् ॥**

अत्रोपपत्तिः । नराकारनरस्य भा पादमानेन मापिता सति पादात्मिका भवति परञ्च मनुष्यपादमानं वितस्तिसमं तेना-

ङ्गुलात्मकं द्वादशसमम् । अत्र यदि पादेनमनुष्यप्रमाणे मापिते तदा रसपादमितं तद्यथा हस्तत्रयसमं मनुष्यप्रमाणं स्वीकृत्याच्यते । तथोक्तं सोमदैवज्ञैः कल्पलताख्यग्रन्थे कृतयुगे मनुष्योच्चम् (२१) त्रेतायुगे मनुष्योच्चम् (१४) द्वापरयुगे मनुष्योच्चम् (७) कलियुगे मनुष्योच्चम् (३॥) "हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः । इत्यादिपाटीगणितोक्तेन चतुर्विंशत्यङ्गुलसममेकहस्तमानं तेन चतुर्विंशतिगुणितं हस्तत्रयमानमिदम् (७२) मनुष्यमानमङ्गुलात्मकं पादाङ्गुलमानेनार्कसमेन विभज्यते तदा पादात्मकं नरोच्चप्रमाणं रसतुल्यं स्यादतः सजात्योः पादभारसमितनरोच्चमानयोर्योगो भवितुमर्हति । अत्र यस्मिन्दिने मध्यदिनोन्नतकालमानं पञ्चदशघटीसमं स्यात्तत्र मापनेन पादभामानं यमसमं दृष्टमस्ति तेन भुजकोटियोगो नागसमो जातः । अत्रेष्टोन्नतकालबोधार्थमनुपातस्तद्यथा नागमितभुजकोटियोगेन पञ्चदशघटिकासममुन्नतं तदेष्टभुजकोटियोगेन पादभारसमितनरयोगसमेन किमित्यत्रापि पूर्वसूत्रवद्विलोमत्रैराशिकेन जातम् $\left(\frac{१५ \times ८}{\text{इयो}}\right) = $ वा $\left(\frac{१२०}{\text{इयो}}\right)$ अत्रापि फलं दण्डात्मकं बोध्यम् । शेषन्तु षष्ठ्या सङ्गुण्य हरेण विभज्य फलं पलात्मकं स्यात् । अत्र भाज्येस्वल्पान्तराद्रूपाधिकग्रहणात्सर्वं व्यवहारार्थं महत्स्थूलमुपपन्नम् ॥

**अथ रात्रेष्टघटिकानयनार्थं कस्यचित्पद्यम् ।**

**तरणिव्योममध्यस्था ऋक्षसङ्ख्या नगोनिता । न-ग्ध्ना नवभिर्भक्ता गता रात्रिः स्फुटा भवेत् ॥**

अत्रोपपत्तिः । अथ व्यवहारार्थं भवृत्ते सप्तविंशतिभानि स-न्त्यत ऊर्ध्वयाम्योत्तरवृत्तादस्तकुजावधि देशविशेषेण नगमि-तादल्पाधिकभानि सम्भवन्ति । परन्त्वत्र स्वल्पान्तरान्नगमि तानि भानि स्वीकृतानि तेनोर्ध्वयाम्योत्तरवृत्तस्थनक्षत्रादर्का-धिष्ठितनक्षत्रसङ्ख्यातो नगसङ्ख्या विशोध्यते तदाऽस्तकुजा-दर्कावधि नक्षत्रसङ्ख्या स्यात्ततोनुपातः। सप्तविंशतिनक्षत्राणि षष्टिघटिकाभिरस्तं यान्ति तदा शेषभानि काभिरिति जातं रात्रिगतकालमानम् ( $\frac{६० शे}{२७}$ ) हरगुणौ त्रिभिरपवर्त्य जातम् [ $\frac{शे २०}{९}$ ] तेनोपपन्नं सर्वम् ॥



**अथ भादर्शनादिष्टकालसाधनार्थं श्रीवराहमि-हिरोक्तपद्यद्वयम् ।**

**दिनं स्वरामैरधिकं यदल्पं रसेन पङ्क्त्या निहतं शरासम् । हीनं धनं देशपलप्रभायां छाया च सा स्याद्दिनमध्यभागे ॥ १ ॥ छाया निजेष्टा दिनमध्य-भागच्छायोनिता दिक्सहिता तयाऽऽप्ते । दिने शरघ्ने गतगम्यनाडी श्रीमान्वराहो वदतीह युक्त्या ॥२॥**

अत्रोदाहरणम् । अत्र भामानं ५ । २ ।

तथा दिनमानं ( ३२ । २१ ) प्रकल्प्योच्यते । खरामादधिकदिनमानमिदं ( २ । २१ ) षड्गुणितं जातं ( १४ । ६ ) परञ्चेदं पञ्चभक्तं फलं ( २ । ४६ ) मिथिलादेशीयपलभामानादस्मात् [ ६ । ० ] विशोध्यते शेषमिदं ( ३ । ११ ) दिनार्धच्छायामानं निजेष्टच्छायामानादस्मात् ( ५ । २ ) विशोध्य शेषेणानेन [ १ । ५१ ] दशयुतेन ( ११ । ५१ ) सवर्णितेन ( ७११ ) पञ्चघ्नं दिनमानं [ १६१ । ४५ ] सवर्णितं [ ६७०५ ] भक्तं फलं घटीमानं ( १३ ) शेषमिदं [ ४६२ / ७११ ] षष्टिघ्नं स्वहरेण विभज्य जातं पलात्मकं [ ३ ] दिनार्धात्पूर्वं गतनाडी दिनार्धात्परं गम्यनाडी भवेदेवं खरामादल्पं दिनं दशघ्नं शराप्तं फलं पलभायां धनं कृत्वा ततः पूर्ववदुन्नतकालमानं सुधीभिर्विभाव्यम् ॥

अत्र वासना । सप्ताङ्गुलाक्षभादेशे मिथुनान्तस्थितरवेः " पलावलम्बापमेनसंस्कृतौ नतोन्नते ते भवतो दिवादले " इत्यादिना भास्करीयसूत्रेण त्रिप्रश्नोक्तेन परापमाक्षभागान्तरसमं दिनार्धनतांशमानं ज्ञात्वा यावद्दिनदले द्वादशाङ्गुलनरस्य भा साध्यते तावदेकाङ्गुला भवेत् । कार्मुकान्तगरवेःपरमापमाक्षभागयोगसमं दिनार्धनतांशमानं पूर्ववत्प्रसाध्य यावद्दिनार्धे भा साध्यते तावत्सप्तदशाङ्गुला स्यात् । तेन गोलक्रमाद्दिनार्धभा पलभातः षड्ना दशाधिका च तथा नद्वित्रसोयदि-

नमानं खरामात्पञ्चघटीभिरधिकं न्यूनं चेति दृष्टमस्त्यतोऽभीष्टदिवसीयदिनार्धभानयनार्थमनुपातः त्रिंशद्दिनमानान्तरेण पञ्चघटीमितेन दिनार्धभापलभयोरन्तरं गोलक्रमेण रसमितं दिग्मितं च लभ्यते तदेष्टदिनमानखरामान्तरेण किमिति फलं $\frac{(\text{गु} \times \text{अं})}{५}$ पलभातः सौम्यगोले हीनं याम्ये तु युतं विहितं सद्दिनार्धभा स्यादित्युपपन्नं प्रथमपद्यम् ।

द्वितीयपद्यार्थमुच्यते । पूर्वसाधितदिनार्धच्छायातो ज्ञातेष्टभातश्चानुपातः । यदि दिनार्धभायया दिनार्धसमो गतैष्येष्टकालो लभ्यते तदेष्टभायया क इति विलोमत्रैराशिकेन दिनार्धच्छायादिनार्धकालयोर्घातो निजेष्टच्छायया भक्तः फलं $\frac{(\text{दिद} \times \text{छा})}{\text{इभा}}$ तावत्स्थूलो पूर्वापरकपालवशेन गतगम्येष्टकालो भवेदित्यत्र यदा दशाङ्गुलदिनार्धभायास्तथा दिनार्धस्य च घातः पञ्चगुणदिनमानसमो जातस्तदेष्टभा च दिनार्धच्छायेष्टच्छाययोरन्तरेण दशयुतेन समा स्यादिति विलोक्य पञ्चगुणं दिनमानं मध्येष्टच्छाययोर्विवरेण दशयुतेन भक्तं सद्गतगम्येष्टकालो वास्तवासन्नो भवति । अत्रेदमवधेयम् । यथा दिनार्धच्छायानयनं सप्तपलप्रभाविषयकमप्यन्यविषये व्यवहारार्थमङ्गीक्रियते तथा दशाङ्गुलमध्यभाभवमिष्टकालानयनं चान्यदिवसीयमध्यभाजनितेष्टकालानयनं स्वीक्रियते तेनोपपन्नं सर्वम् ॥

अथ धूलीकर्मणोपपत्तिः । यत्र सप्ताङ्गुला विषुवती तत्र

" दिङ्नागसत्र्यशगुणैर्विनिघ्नी पलप्रभा तोयपलात्मकानि "
इतिभास्करीयगणिताध्यायस्पष्टाधिकारोक्तेन चरखण्डानि
( ७० । ५६ । २३ ) एषां योगः ( १४९ ) पलात्मकं चरमानं
मिथुनान्ते कार्मुकान्ते च । ततः सार्धद्वयमितं चरमानं घट्या-
त्मकं ( २ । २९ ] ततो द्विगुणचरमानं बाणसमं [ ५ ] तत्राप-
मांशाः [ २४ ) पलांशाश्च ( ३० ) ततः पूर्ववद्गोलक्रमेण नतां-
शमाने ( ६ ) ( ५४ ] तथोन्नतांशमाने ( ८४ ) ( ३६ ) लघु-
ज्यापक्षे सौम्यगोले दृग्गुणमानं ( १२ ) तथा शङ्कुमानं [११२]
सिद्धान्तरीत्या दृग्गुणमानं द्वादशगुणं शङ्कुभक्तं मिथुनान्ते म-
ध्यभा मानं [ १ । १४ ] परञ्च स्वल्पान्तरादेकाङ्गुलं भामानं
गृहीतं ( १ ) तेन मध्यभापलभान्तरं रसमितं सिद्धम् । याम्य-
गोले दृग्गुणमानमिदं ( ९७ ] द्वादशगुणं शङ्कुमानेनानेन (७६]
भक्तं जातं चापान्ते मध्यभामानं ( १६ । ३७ ) अत्रापि गृहीत-
सप्तदशाङ्गुलभामानपलभान्तरं दशमितं सिद्धम् । ततोऽनुपा-
तः । पञ्चमितेन द्विगुणपरचरमानेन गोलक्रमाद्रसमितं दिग्मि-
तं च मध्यभाक्षभान्तरं लभ्यते तदा खाग्निदिनमानान्तरमितेन
द्विगुणचरेण किमित्यत्राभीष्टदिवसीयमध्यभाक्षभान्तरं तत्पल-
भायां संस्कार्यं तदा मध्यभा स्यादित्यत्रयुक्तिः । मेषादौ मध्य-
भा पलभासमा तेन तदन्तरं खं तत्रैव चरमानमपि खमस्ति ततो
नतांशानामल्पत्वादुत्तरोत्तरं मध्यभापचयवशेन मिथुनान्ते
परमाल्पिका मध्यभा स्यात्तेनात्र मध्यभाक्षभान्तरं परमाधिकं
तथा चरमानमपि परमाधिकं दृष्टं ततो नतांशानामधिकत्वान्म-

ध्यभोपचयवशेन कन्यान्ते पुनः पलभासमा मध्यभा स्यादत्र तदन्तरं खं तथा चराभावोऽप्यस्ति । ततः कार्मुकान्ते नतांशानां परमाधिकत्वान्मध्यभा परमाधिका स्यात्तेन मध्यभाक्षभान्तरं परमं तथाऽत्र चरमानमपि परमाधिकं दृष्टम् । ततस्तदन्तरचरमानयोस्तुल्योपचयापचयवशाच्चरमानात्तदन्तरानयनं भवितुमर्हति । तथा तदन्तरं पलभातः सौम्यगोले विशोध्यते याम्ये तु योज्यते तदेष्टदिने मध्यभा स्यात् । अत्रेदमवधेयम् । प्रथमपद्यं सप्तपलभाविषये समीचीनं भिन्नपलभादेशे स्थूलम् । द्वितीयपद्यन्तु सप्तपलभादेशे ऽपि स्थूलं यतो दशाङ्गुलमध्यभादिनेष्टकालानयनवदन्यदिवसीयमध्यभाजनितेष्टमानं कृतम् । द्वितीयपद्यस्योपपत्तिरुच्यते । पूर्ववद्विलोमत्रैराशिकेन दिनार्धस्य मध्यभागुणक इष्टभा हरोऽस्त्यत्र तारतम्येन किञ्चित्स्थूलं स्यादतः स्वेच्छया गुणहरौ मध्यभोनौ तथा दशयुताविति दिनदलं दशगुणं मध्येष्टभान्तरेण दशयुतेन भक्ताविति सिद्धं तदपि वास्तवन्न यतो गुणहराविष्टेन गुणितौ भक्तौ वा फलस्य विकारो न भवेत् । किन्तु सिद्धान्तरीत्या साधितेष्टघटिकासन्ना चेयमिष्टघटिका भवेत्तेन व्यवहारार्थं सर्वमुपपन्नम् ॥ अथ युक्तिवैचित्र्यदर्शनार्थं पुनः प्रकारान्तरेणोपपत्तिः । पूर्वप्रकारेण सप्ताक्षभाविषये पलभामध्यभान्तरं परमं गोलक्रमेण रसमितं दिग्मितं च सिद्धमेवानुपातः । सप्तपलभायां गोलक्रमेणैते द्वे ( ६ ) ( १० ) परमान्तरे तदेष्टपलभायां के जाते स्वेष्टदेशीयमध्यभाक्षभान्तरे

परमे $\frac{(६ प)}{७}$ । $\frac{(१० प)}{७}$ । अथाक्षभागुणितो दिङ्नागसत्र्यंशयोगः पलात्मकं परमं चरखण्डम् प (२१ + २० )। खाग्निदिनमानान्तरार्धं षष्टिगुणं जातं पलात्मकेष्टचरखण्डम् $\frac{(\text{अं } ६०)}{२}$

ततोऽनुपातस्तद्यथा परमचरखण्डपलेन पूर्वसाधितपरमान्तरे तदेष्टचरखण्डपलेन के जाते गोलक्रमेणेष्टदिवसीयमध्यभापलभान्तरे $\frac{(६ प \times \text{अं } ६०)}{प (२१+२०] ७\times२}$ । $\frac{[१० प \times \text{अं } ६०]}{प (२१+२०) ७\times२}$ ।

अत्र गुणहरौ पञ्चापवर्त्य पलभातुल्यगुणहरयोर्नाशं कृत्वा हरयोर्घातं षष्ट्या विभज्य स्वल्पान्तरात्फलं बाणमितं गृहीतमिति जातं $\frac{(६ \text{ अं})}{५}$ $\frac{[१० \text{ अं})}{५}$ फलं स्वदेशीयपलभातो विशोध्यते योज्यते च



गोलक्रमेण तदा मध्यभे स्यातामेतेनाभीष्टदेशीयमध्यभानयनं सिद्धम् । अथ दिनार्धे मध्येष्टभान्तरं खं तत्र दिनार्धसमः परमोन्नतकालः । इष्टकाले मध्येष्टभान्तरादनुपातः । खमितेन मध्येष्टभान्तरेण दिनार्धसमान्नतकालस्तदेष्टमध्येष्टभान्तरेण क इति विलोमत्रैराशिकेन जातम् $\frac{(\text{दि} \text{ अ} \times ०)}{\text{इ} \text{ अं}}$ अत्र खगुणे कृते सर्वत्रैवोन्नताकालाभावस्तेनान्यथा यतितव्यं, यदि दशयुतमध्येष्टभान्तरेण दशमितेन दिनदलं तदा दशयुतेन मध्येष्टभान्तरेण किमिति पूर्ववज्जातम् $\frac{(\text{दि} \text{ अं } १०)}{(\text{इ} \text{ अं} + १०)}$ = $\frac{(\text{दि } ५)}{\text{ह}}$ तेनोपपन्नं सर्वम् ॥

**अथ मिथिलादेशीयसूक्ष्मेष्टकालानयने मदुक्त-पद्यद्वयम् ॥**

**पूर्णरामाधिकाल्पं दिनं ताडितं सार्धबाणैस्त्रि-भागाधिकेभैः क्रमात् । सार्धपादागमैर्भक्तमूनं युतं शत्रतुल्याद्दभातो दिनार्धप्रभा । १ । तदूनितेष्टद्यु-तियुक्तदिग्भिर्बाणाहताद्वासरमानतः फलम् । गतैष्यनाडी मिथिलाख्यदेशे श्रीकृष्णदत्तो वदति स्वयुक्तया । २ ।**

अत्रोपपत्तिर्धूलीकर्मणा । प्रौढगणकस्वीकृतं मिथिलादेशीय-पलभामानं षडङ्गुलं वर्त्तते तस्मात्पूर्ववच्चरखण्डानि (६०।४८ । २० ] एतद्योगसमं सकलचरमानं पलात्मकं नागद्विचन्द्रमितम् ( १२८ ) षष्टिभक्तं तन्मिथुनान्ते कार्मुकान्ते च चरमानमष्टपला-धिकयमघटीसमम् ( २ । ८ ] तद्द्विघ्नं तदा षोडशपलाधिकवे-दघटीसमं द्विगुणितचरमानम् ( ४ । १६ ) पञ्चाल्पान्तरत्वा-त्सपादवेदसमं गृहीतम् ( $\frac{१७}{४}$ ) तत्रत्याक्षांशमानं षड्विंशति-समं ( २६ ) ततो गोलक्रमेण जिनांशाक्षांशान्तरयोगाभ्यां मिथुन-कार्मुकान्ते नतांशमानं द्विमितं खबाणसमञ्चेति जातम् [ २ ] । ( ५० ) तथोन्नतांशमानमष्टाशीतिसमं चत्वारिंशन्मितं चेति जातम् ( ८८ ) ( ४० ) अत्र लघुज्यापक्षे मिथुनान्तनतांशज्या-मानं वेदमितं ( ४ ) द्वादशगुणं स्वोन्नतांशज्यामानेन खाश्विच-न्द्रसमेन ( १२० ) भक्तं फलं चतुर्विंशतिव्यंगुलसमं मध्यभामा-

नम् [ ० । २४ ] ० पलभान्तरं षट्त्रिंशद्व्यंगुलाधिकशराङ्गुल समं ( ५ । ३६ ) स्वल्पान्तरात्सार्धपञ्चमितं गृहीतम् $\frac{(\text{११})}{\text{२}}$

एवं चापान्तजनतांशज्यामानं द्विनवतिसमं [ ९२ ] द्वादशगुणं स्वशङ्कुमानेन सप्तसप्ततिसमेन (७७) भक्तं जातं विंशतिव्यङ्गुलाधिकेन्द्रांगुलसमं मध्यभामानं ( १४।२० ) तेन मध्यभाक्षभान्तरं त्रिलवाधिकाष्टमितं [ ८ । २० ] सिद्धम् । अत्राभीष्टदिवसीयमध्यभापलभान्तरसाधनार्थमनुपातः । यदि सपादवेदमितेनर्द्विगुणपरमचरेण मध्यभाक्षभान्तरं गोलक्रमेण सार्धपञ्चमितं त्रिलवाधिकाष्टसमं च लभ्यते तदा खाग्निदिनमानान्तरेणाभीष्टचरेण किमिति फलं पूर्ववद्रसांगुलाक्षभातो गोलक्रमाद्विशोध्यं योज्यञ्च तदाऽभीष्टदिवसीयमध्यभा स्यात्तेनोपपन्नमाद्यपद्यम् । द्वितीयपद्यार्थमनुपातस्तद्यथा मध्यभया दिनदलसमो गतैष्यकालो लभ्यते तदेष्टभया क इति पूर्ववद्विलोमत्रैराशिकेन जातम् $\frac{(\text{मभा} \times \text{दिद})}{\text{इभा}}$ परञ्च तारतम्येनागतं फलं स्थूलं तेन गुणहरौ पूर्ववन्मध्यभोनौ दशसहितावित्ति $\frac{(\text{दिद} + \text{१०})}{(\text{इभा}-\text{मभा}) + \text{१०}}$ । $= \frac{(\text{दि ५})}{\text{ह}}$ जातं वास्तवासन्नं तेनोपपन्नं सर्वम् ॥

अत्र सिद्धान्तरीत्या तथा मदीयपद्येन तथा श्रीवराहमिहिरोक्तपद्येन चानीतकालानामन्तरज्ञानार्थमुदाहरणमुच्यते । तत्रैकदशसमोन्नतांशमानं प्रकल्प्यायावहलघुज्यापक्षे तज्ज्या साध्यते

तावद्द्वाविंशति समा ( २२ ) भवेत् । एवं रूपोनाशीतिसमन-तांशानां ज्या नगेन्दुचन्द्रसमा जाता [ ११७ ) अत्र नतांशज्या द्वादशगुणा शंकुना भक्ता फलं रूपोनपञ्चाशद्व्यंगुलाधिका त्रिषष्टिमिताऽभीष्टप्रभा स्यात् ( ६३ । ४६ ) एवं मिथिलादेशी-यषडंगुलपलभातः पलकर्णवर्गः खाष्टेन्दुसमः (१८०) अस्य मूलं (१३) शेषमिदं ( ११ ) सैकं तज्जात्यापेक्षायां षष्टिघ्नं न कृतमतो द्विगुणेन द्वियुक्तेन मूलेनानेन ( २८ ) भक्तं तज्जातं ( १२/२८ ) = ( ३/७ ) परच्छेदं पूर्वमूले युतं जातं पलकर्णमानम् ( ९४/७ ) । अत्र पलकर्णमानं शंकुगुणं द्वादशभक्तं फलमिष्टहृतिः [ २४ । ३७ ] अत्रेयं त्रिज्यागुणा मेषान्तद्युज्यामानेनानेन ( ११७ ) भक्ता फल-मिष्टान्त्या पञ्चविंशतिसमा ( २५ ) भवेत । अत्रत्यचरमानं पला-त्मकं षष्टिसमं ( ६० ) तज्ज्या द्वादशसमा ( १२ ) तयोनेष्टान्त्या त्रयोदशसमं ( १३ ) सूत्रं जातम् । तच्चापं भागात्मकं [६ । ३०) तद्रसभक्तं तदा घट्यात्मकं जातम् [ १ । ५ ] तच्चरचापयुतं जातं सिद्धान्तप्रमुन्नतकालमानं पञ्चपलाधिकद्विघटीसमम् [ २ । ५ ] । अथ मदुक्तपद्येन पूर्णरामाधिकं मेषान्तजदिनमानं द्विघटीसमं ( २ ) सार्धबाणेनानेन ( ११/२ ) गुणितं जातं ( ११ ) तत्सपादवेदेनानेन ) १७/४ ) भक्तं फलमिदं ( २ । ३५ ) षडंगुलप-लभातः शोध्यं तदा मध्यभामानं पञ्चविंशत्यधिकं। त्रिमितं जातम्

( ३ । २५ ) । तदूनं पूर्वसाधितेष्टभामानं ( ६२ । ४ ) जातं चतुर्विंशत्यधिकषष्टिसमम् ( ६० । २४ ) दशसहितेनानेन ( ७० । २४ ) सवर्णितेन [ ४२२४ ] भक्तं शरघ्नं सवर्णितं दिनमानं ( ६६०० ) फलं षोडशपलाधिकं द्विघटीसममुन्नतकालमानम् ( २ । १६ ) अथ वराहमिहिरोक्तपद्येन खरामाधिकं दिनमानं ( २ ) रसेन निहतं पञ्चभक्तं फलमिदं ( २ । २४ ) षडंगुलपलभातो विशोध्यं शेषमिदं ( ३ । ३६ ) पूर्वकृतेष्टभातः शोध्यं शेषं ( ६० । १३ ) दशयुतं जातं ( ७० । १३ ) । सवर्णितेन तेन ( ४२१३ ) शरघ्नं सवर्णितदिनं ( ६६०० ) भक्तं फलं सप्तदशपलाधिकं द्विघटीसममुन्नतकालमानम् ( २ । १७ ) । अत्रेदमवधेयम् । सिद्धान्तरीत्यानीतोन्नतकालस्य मदुक्तसूत्रेणानीतोन्नतकालस्यचान्तरं ( ११ ) भवसमम् । मदुक्तसूत्रेणानीतोन्नतकालस्य श्रीवराहमिहिरोक्तपद्येनानीतोन्नतकालस्य च विवरमेकपलसममतोदेशविशेषवषाद्वराहोक्तपद्येनेष्टघटिकानयनं महत्स्थूलमिति सुजनगणैर्निपुणं विभावनीयमित्यलं पल्लवितेन ॥

**अथ पञ्चसिद्धान्तिकायां वराहमिहिरस्य भानयनार्थं स्थूलो द्वितीय प्रकारो यथा । षडघ्नेऽथवा द्युमाने च्छिन्ने सद्वादशैर्विमध्याह्नैः । छायाङ्गुलैर्गतास्ता नाड्यःप्राक् पृष्ठनः शेषाः ॥**

अथ पञ्चसिद्धान्तिकाटीकाकारेण लब्धमहामहोपाध्याय पदवीकेन श्रीमत्सुधाकराचार्येण विहितोपपत्तिरुच्यते । अत्राचार्येणाद्यमनुपातः कृतो यदि मध्यच्छायारहितद्वादशेष्टच्छा-

यायोगा द्वादशसमस्तदा दिनार्धसमा इष्टनाड्यो भवन्ति । अथ मध्यच्छायारहितद्वादशेष्टच्छायायोगो यदा केनचिदिष्टाङ्केन समस्तदा का नाड्यः । इत्यत्र व्यस्तानुपातेन इष्टनाड्यः

$$= \frac{\text{१२ दि}}{\text{२ ( १२ + इभा − मभा )}} = \frac{\text{६ दि}}{\text{१२+इभा − मभा}}$$ अत उपपन्नम् ।

एतद्व्यस्तानुपातेन या नाड्यः समायान्ति ताः स्थूला यतोऽयमनुपातो नहि समीचीनः । आचार्येण वसिष्ठोक्तिजं झटिति कालज्ञानार्थं स्थूलमपि सुखार्थं प्रकारान्तरं निर्मितं सूक्ष्मार्थन्तु प्रथमविधिरेव विधेय इति गतगम्यवासना चाति सुगमेति सर्वन्निरवद्यम् ।

## अथेष्टतो भानयनम् ।

छायार्कनाडीभिर्दिनमानं षडघ्नमुद्धरेत्तत्र । लब्धं द्वादशहीनं मध्याह्नच्छायया सहितम् ।

अत्रोपपत्तिः पूर्वप्रकारवैपरीत्येन पूर्वप्रकारेण

$$\text{इना} = \frac{\text{६ दि}}{\text{१२ + इभा − मभा}},$$

इना [ १२ + इभा − मभा ] = ( ६ दि ) ततः ( १२ + इभा − मभा ) $= \frac{\text{( ६ दि )}}{\text{इना}}$ = ल अस्मात् इभा = ( ल + मभा − १२ ) अत उपपन्नं सर्वम् ॥

अथेष्टतो भानयनार्थं कस्यचित्पद्यम् । दशघ्नाद्दिनमानार्धादुगतगम्यघटीहृतात् । मध्यभाढ्यं खचन्द्रोनं छाया स्यादिष्टकालिका ॥

अत्रोपपत्तिर्दिनंखरामैरितित्रैपरीत्येनोच्यते । पूर्वप्रकारेणे-
ष्टमानम् इना = $\frac{१० दि}{२}$ ततः इना [ १० + इभा–मभा ] =
१० + इभा–मभा
$\frac{१० दि}{२}$ अस्माज्जातम् $\frac{१० दि}{२}$ = ल = ( १० + इभा–मभा ] ततः
इना
इभा=ल-१०+मभा तेनोपपन्नं सर्वम् ।

## रवौ वर्ज्यं चतुष्पञ्च सोम इत्यादि ॥

अत्र युक्तिः ॥ "आद्योष्टभागो दिवसाधिपस्य ततः परं षट् परिवर्तनेन । तस्मिन्विभागे रविजस्य वेला सर्वेषु कार्येष्वधमा भवेत्सा" ॥ इत्यागमप्रमाणेन रविवारे यथा क्रमेण शनिभागा-वधिन्यासः र १ शु २ बु ३ चं ४ श ५ । एवन्न्यासक्रमेण चन्द्रे द्वितीयभागः कुजे षष्ठभागो बुधे तृतीयभागो गुरौ सप्तमभागः शुक्रे चतुर्थभागः शनावाद्यन्तभागः शनिवेला भवेत् । रव्यादि-वारे रविजवेलातिरिक्तभागा अर्धप्रहराभिधाः पूर्वकथितवार-स्त्रिघ्नोष्टभिस्तष्ट इत्यादिसिद्धा एवातः सर्वमुपपन्नम् ॥



## रवौ रसाब्धी सितगौ हयाब्धी द्वयमित्यादि ॥

अत्र युक्तिः ॥ "तथा निशायां वसुभाग आद्यस्ततः परं वै शरवर्तनेन । तस्मिन्विभागे रविजस्य वेला शुभेषु कार्येष्वखिलेषु निन्द्या" ॥ इति वचनप्रमाणेन रविवारे शनिभागावधि यथा क्रमेण न्यासः । र १ वृ २ चं ३ शु ४ मं ५ श ६ । एवं चन्द्र

निशायां चतुर्थ भागः कुजे द्वितीयभागो बुधे सप्तमभागो गुरौ पञ्चमभागः शुक्रे तृतीयभागः शनावाद्यन्तभागः शनिभागो भवेत् अर्धप्रहराख्यभागास्तु दिनवद्बोध्यास्तेनोपपन्नं सर्वम् ॥

## अथ विंशोत्तरीदशानयनाय कस्यचित्पद्यम् ॥

गणयेत्कृत्तिकाभाच्च यावद्वै जन्मभावधि ॥ नवभिश्च हरेद्भागं शेषं ग्रहदशा भवेत् ॥ आचकुराजीशबुकेशुपूर्वाः क्रमाद्भवेयुः स्वदशाधिनाथाः ॥

अत्र युक्तिः ॥ कृत्तिकादिनक्षत्राणां जन्मवशाद्रविचन्द्रकुजराहुजीवशनिबुधकेतुशुक्राणां दशाकल्पनावशात्कृत्तिकातो जन्मनक्षत्रावधि नवाधिकसंख्याप्रयोजनाभावान्नवतष्टसंख्या प्रोक्तग्रहाणां दशा स्यादित्युपपन्नं यथोक्तम् ।

## अथ भुक्तभोग्यदशानयनार्थं कस्यचित्पद्यम् ॥

गतर्क्षनाडी विहता दशाब्दैः सर्वर्क्षनाडीविहृता फलं यत् । वर्षादिकं भुक्तिमिह प्रकल्प्य स्वाब्दै रपास्यं भवतीह भोग्यम् ।

अत्र युक्तिः । यदा नक्षत्रान्ते जन्म तदैव स्वस्वपठितवर्षादिकं पाकमानं सम्पूर्णमतीतम् । यदा भादौ तदा सम्पूर्णं पाकमानमेष्यम् । तदन्तरे चानुपातस्तद्यथा भभोगतुल्यभयातमानेन कथितदशामानं गतं तदेष्टभयातेन किमित्यागतं $\frac{(द \times भया)}{भभो}$ दशामानाद्विशोध्यते तदा भोग्यदशामानं भवेत्तेनोपपन्नं सर्वम् ॥

**अथान्तर्दशादिसाधनार्थं कस्यचित्पद्यम् । दशापतिसमानिघ्नो विहृता परमायुषा । अन्तर्दशाभवेदेवं चाभ्यः स्याद्विदशातथा ॥**

अस्यार्थः । यस्य ग्रहस्य दशायामन्तर्दशा कर्त्तव्या तद्ग्रहस्य दशा सर्वेषां खेटानां दशामानैः पृथक् पृथक् गुणिता परमायुषा भक्ता फलमन्तर्दशा भवेदेवमन्तर्दशामानं तद्ग्रहमहादशान्तर्गतान्तर्दशामानैः पृथक् पृथक् गुण्यं तद्ग्रहदशामानेन भक्तं विदशा स्यादेवमुपदशादिकमनुक्तमपि बोध्यम् ।

अत्रोपपत्तिः । परमायुः प्रमाणे सर्वेषां खेटानां स्वस्वदशामानानि लभ्यन्ते तदा निजग्रहमहादशासमपरमायुः प्रमाणे कानीति फलमन्तर्दशाख्यमेवंमहादशामानं परमायुः प्रमाणं प्रकल्प्यानुपातः । यदि महादशासमपरमायुः प्रमाणे सर्वेषामन्तर्दशामानानि पृथक् पृथक् लभ्यन्ते तदा निजखेटान्तर्दशासमपरमायुः प्रमाणे कानीति फलं विदशाख्यमेवमुपदशादिकं बोध्यं तेनोपपन्नं सर्वम् ॥

**अथान्तर्दशानयने मदुक्तपद्यम् । पाकेशपाकाहतसर्वपाकारखेन्द्वाप्तमासात्मकमेव शेषम् । रामैर्विनिघ्नं दिवसः स्फुटः स्यादन्तर्दशा स्यात्क्रमशो ग्रहाणाम् ॥**

अत्रोपपत्तिः । पूर्ववदन्तर्दशास्वरूपम् । $\left[\frac{\text{इद} \times \text{सद}}{१२०}\right]$

वर्षात्मकमस्ति । तन्मासकरणार्थं द्वादशगुणितं जातम् $\frac{(\text{इद} \times \text{सद})}{१२०}$ १२ हरगुणौ गुणकेनापवर्त्य जातम् $\frac{(\text{इद} \times \text{सद})}{१०}$ फलं मासात्मकं शेषमिदं $\left(\frac{\text{शे}}{१०}\right)$ त्रिंशद्गुणितं जातं दिनात्मकं $\frac{(\text{शे } ३०)}{१०}$ हरगुणौ हरेणापवर्त्य जातम् (शे ३) तेनोपपन्नं सर्वम् ॥ अत्रोदाहरणम । रविदशामानं ( ६ ) स्वदशामानेन गुणितमिदं ( ३६ ) दशभक्तं फलं मासात्मकम् [ ३ ] शेषमिदं ( ६ ) रामाहतं दिनात्मकं [ १८ ] स्यात्तेनेदं रविमहादशायां रव्यन्तर्दशामानमेवं चन्द्रादीनामपि बोध्यम् ।

**अथ विदशानयनार्थं मदुक्तपद्यम् । दशान्तर्गतान्तर्दशाभिर्विनिघ्नं दशेशाब्दमानं विभक्तं समुद्रैः । फलं वासरा बाणचन्द्रघ्नशेषैः समा नाडिका वै विपाकक्रमोऽयम् ॥**



अत्रोपपत्तिः । यदि खनेत्रेन्दुवर्षैरिष्टग्रहदशावर्षं तदेष्टग्रहदशान्तर्गतस्वस्वमासात्मकान्तर्दशामानभववर्षैः $\frac{(\text{अंद})}{१२}$ किमिति जातं वर्षात्मकं विदशामानं $\frac{(\text{इद} \times \text{अंद})}{१२० \times १२}$ एतत्खरसाग्निगुणितं दिनात्मकं स्यादिति रूपम् $\frac{(\text{इद} \times \text{अंद})(१२ \times ३०)}{१२० \times १२}$ अत्र द्वादशसमगुणहरयोरपगमात्तथा गुणहरयोस्त्रिंशतापवर्त्त-

नाच्च जातम् । ( $\frac{\text{इद} \times \text{अंद}}{\text{४}}$ ) अत्रत्यं शेषं ( $\frac{\text{शे}}{\text{४}}$ ) घटीकरणार्थं षष्टिघ्नं जातम् ( $\frac{\text{शे ६०}}{\text{४}}$ ) गुणहरौ हरेणापवर्त्य जातम् (शे १५) तेनोपपन्नं सर्वम् ॥

अत्रोदाहरणम् । पूर्वरीत्या साधितशुक्रस्य दशान्तर्गतान्तर्दशामानमासात्मकं [ ४० ] स्वदशावर्षेणानेन [ २० ] गुणितं वेदेन भक्तं फलं दिनात्मकं [ २०० ] मासकरणार्थं खाग्निभक्तं जातं शुक्रान्तर्दशान्तर्गतं शुक्रविदशामानं । ६ । २० । एवमन्यखेटानामपि बोध्यम् ।

**अथोपदशासाधने मदीयपद्यावतारः । निजान्तर्दशामध्यसंस्थैर्विपाकैर्हतोऽभीष्टपाकः कराभ्यां विभक्तः । ततः खाग्निनिघ्नावशेषं पलं स्यादयं कृष्णदत्तोक्तरीत्योपपाकः ॥**

अत्रोपपत्तिः । यदि खयमेन्दुवर्षेण निजमहादशावर्षं लभ्यते तदा वर्षात्मकस्वस्वविदशाप्रमाणैरेतैः ( $\frac{\text{विद}}{\text{१२} \times \text{३०}}$ ) किमिति जातं वर्षात्मकं विदशान्तर्गतोपपाकमानम् ( $\frac{\text{इद} \times \text{विद}}{\text{१२०} \times \text{१२} \times \text{३०}}$ ) एतत्खरसाग्निगुणं दिनात्मकं स्यादिति जातम् ( $\frac{\text{इद} \times \text{विद} \times \text{१२} \times \text{३०}}{\text{१२०} \times \text{१२} \times \text{३०}}$ ) वा = [ $\frac{\text{इद} \times \text{विद}}{\text{१२०}}$ ] एतत्षष्टिघ्नं घट्यात्मकं स्यादिति जातम्

$\left[\frac{\text{इद} \times \text{विद} \times ६०}{१२०}\right]$ अत्रापि गुणहरौ गुणेनापवर्त्य जातम्

$\left[\frac{\text{इद} \times \text{विद}}{२}\right]$ अत्रत्यं शेषं $\left[\frac{\text{शे}}{२}\right]$ पलार्थं षष्टिघ्नं जातं $\left[\frac{\text{शे } ६०}{२}\right]$

=[ शे ३० ] तेनोपपन्नं सर्वम् ।

अत्रोदाहरणम् । शुक्रदशावर्षमानं (२०) पूर्वसाधितस्वान्तर्दशान्तः पातिस्वविदशामानेनानेन [ २०० ] गुणितं करभक्तं फलं [ २००० ] शेषं खमितं खाग्निगुणं खमेवातः फलं षष्टिभक्तं लब्धं ( ३३ ) दिनात्मकम् । एतत्खाग्निभक्तं फलं ( १ ) मासात्मकं स्यात्तेन शुक्रविदशान्तर्गतं स्वोपपाकमानमेतादृशम् ( १ । ३ । २० ) एवमन्योपपाकमानं बोध्यम् ।



अत्र प्रसङ्गाद्दशामानद्योतनपद्यं बृहत्पराशरहोरायाम् ।

रसाशामुनिधृत्यब्दाभूपा एकोनविंशतिः । ससेन्दवो नगा व्योमबाहवो भास्करादितः ॥

आगमप्रमाणेनेतदुक्तं । र ६ चं १० कु ७ रा १८ जी १६ श १९ बु १७ के ७ शु २० ॥

अथ दशादिसाधने कस्यचित्सार्धपद्यद्वयम् ।

आयुः षडंशो भृगुजस्य वर्षं तद्विंशतेरंशविहीनशुक्रः । शनिर्भवेत्तेन विहीनसौरिस्तमोपि तद्धीनतमो बुधः स्यात् । १ । तेनोनितो ज्ञो गुरुवर्षमानं ।

भृगोर्दलं चन्द्रमसः प्रमाणम् । ज्ञ चन्द्रयोरन्तरभौम-केतू शुक्रस्य त्रिंशांशविहिनभौमः ॥ २ ॥ रविर्भवे-त्खेटदशादिमानं विंशोत्तरोसंज्ञकमत्र नूनम् ।

अत्र युक्तिः । विंशत्यधिकशतवर्षपरमायुः षडंशोविंशति-स्समः शुक्रपठितदशाप्रमाणेनसमः स्यादेवमन्यखेटानामपि बोध्यं तेन दशानयनमुपपन्नम् । अथ पूर्वानीतान्तर्दशास्वरूपेऽस्मिन् $\left(\frac{\text{इद} \times \text{सद}}{१२०}\right)$ शुक्रमहादशाग्रहणाज्जातम् । $\left[\frac{२० \times २०}{१२०}\right] = \left[\frac{२०}{६}\right]$ एवं प्रमाणफलं शनिमहादशामानेनोत्थाप्य जातम् $\left(\frac{१६ \times २०}{१२०}\right)$ $= \frac{१६ \times २०}{२० \times ६}$ अत्र शुक्रदशान्तर्गतान्तर्दशामानेन स्वदशाषडं-शसमेनोत्थाप्य जातम् $\left(\frac{\text{शुद}}{६}\right) \frac{१९}{२०}$ रूपविभागखण्डगुणनात्स्व-रूपम् $(२०-१)\ \frac{\text{शुद}}{२०\ \ ६} = \frac{\text{शुद}\ \ २०-\text{शुद}}{६ \times २०\ ६ \times २०} = \left[\frac{\text{शुद}-\text{शुद}}{६\ \ ६}\right]\ \frac{१}{२०}$

एतेनेदं सिद्धं यन्महादशामानं परमायुः प्रमाणं प्रकल्प्य तत्षडंश-समं तन्महादशान्तर्गतान्तर्दशामानं शुक्रस्य तथा शुक्रस्यान्तर्द-शामानं स्वविंशांशोनं शनेरन्तर्दशामानं भवेत् । एवमन्यवि-भागोपपत्तिरपि बुद्धिमता निजमत्या विभावनीया । एवमन्त-र्दशादिमानं परमायुः प्रमाणं प्रकल्प्य स्वस्वविभागाः विपाको-पपाका भवेयुरित्यस्यापि वासना पूर्वानुसारेण बोध्यास्तेन सर्वन्निरवद्यम् ॥

## अथ योगिनीजातकोक्तयोगिनीदशानयनार्थंपद्यम् ।

**स्वर्क्षंपिनाकनयनैः संयोज्य वसुभिर्हरेत् । शेषेषु योगिनी ज्ञेया शून्यशेषेषु सङ्कटा ॥**

अत्रोपपत्तिः । तत्रागमप्रमाणेनाश्विन्यादिभेषु जन्मवशेन भ्रामरीतोऽष्टौ योगिन्यः पाकेशा भवन्त्यस्माद्दास्राख्यभाज्जन्मनक्षत्रावधि यावत्सङ्ख्या तावदग्नियुता मङ्गलादिगणनार्थं कृता । अष्टाधिकप्रयोजनाभावान्नागतष्टा कृता तेनोपपन्नं सर्वम् ।

**अथयोगिनीनामद्योतनमदीयपद्यम् । मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा । उल्का सिद्धा सङ्कटाऽऽसां रूपवृद्ध्या दशाः स्मृताः ॥**

अथास्पतिद्योतनपद्यद्वयम् ।

**पिङ्गलेशो भवेत्सूर्यो मङ्गलेशो निशाकरः । भ्रामरीशो भवेद्भौमो धान्याधीशो बुधस्तथा । १ । भद्रिकेशो गुरुश्चैव सिद्धेशः कविरुच्यते । उल्केशो भानुतनयः सङ्कटेशस्तथा तमः । २ ।**

अत्रोदाहरणम् । कृष्णदत्तस्य जन्मनक्षत्रं मघाऽतो दास्रादिगणनया दशसङ्ख्या स्यात्सा त्रियुता त्रयोदशसङ्ख्या तेन नागतष्टा पञ्चमिता स्यादतो मङ्गलादिगणनया भद्रिकायां कृष्णदत्तस्यजन्म स्यादिति बोध्यम् ॥

**अथान्तर्दशासाधने मदुक्तपद्यावतारः । निजपाकसमाहतपाकसमास्त्रिहृताः खलु मास इहेति फलम् । अवशेषविनिघ्नखचन्द्रसमो दिवसो लघुपाक इति प्रभवेत् ॥**

अत्रोपपत्तिः । अत्र षट्त्रिंशत्वर्षसमपरमायुःप्रमाणवशात्पूर्ववदनुपातेनान्तर्दशामानस्वरूपम् $\left[\frac{\text{इद} \times \text{सद}}{\text{३६}}\right]$ तन्मासकरणार्थं द्वादशगुणं कर्त्तव्यं तेन द्वादशभिरपवर्त्तितं जातम् $\left(\frac{\text{इद} \times \text{सद}}{\text{३}}\right)$ अत्रत्यं शेषं $\left[\frac{\text{शे}}{\text{३}}\right]$ त्रिंशद्गुणं दिनं भवेदिति जातम् $\left(\frac{\text{शे ३०}}{\text{३}}\right)$ = शे १० तेन सर्वमुपपन्नम् ।



**अथ विदशानयने मदीयपद्यावतारः । शरनिघ्नदशापतिपाकहताल्लघुपाकगुणादरिलब्धदिनम् । अवशेषसमाहतखेन्दुसमा घटिकेति विपाक इहैव भवेत् ॥**

अत्र वासना विंशोत्तरीविदशानयनवाद्दिनात्मकमत्रत्यं विदशामानम् $\left[\frac{\text{इद} \times \text{अंद} \times \text{१२} \times \text{३०}}{\text{३६} \times \text{१२}}\right] = \left[\frac{\text{इद} \times \text{अंद ५}}{\text{६}}\right]$ अवशेषे षष्टिघ्ने जातं घट्यात्मकं $\frac{\text{शे १०}}{\text{६}}$ = (शे १०] तेन सर्वमुपपन्नम् ॥

अथोपपाकसाधने मदीयपद्यम् । इषुताडितसर्वविपाकगणान्निजपाकहृतादनलासघटी । नखताडितशेषसमं हि पलं प्रभवेदुपपाक इहेति सदा ॥

अत्रोपपत्तिः । पूर्वरीत्याऽनुपतनादुपपाकमानं नाडिकात्मकम् $\left(\frac{\text{इद} \times \text{विद} \times १२ \times ३० \times ६०}{३६ \times १२ \times ३०}\right)$ वा $= \left[\frac{\text{इद} \times \text{विद}\ ५}{३}\right]$

अत्रापि षष्टिघ्नशेषं जातम् $\left(\frac{\text{शे}\ ६०}{३}\right) = (\text{शे}\ २०)$ तेनोपपन्नं सर्वम् ॥

अथाष्टोत्तरीदशानयने पराशरोक्तपद्यानि ।

सूर्यश्चन्द्रः कुजः सौम्यः शनिर्जीवस्तमो भृगुः । एते दशाधिपाः प्रोक्ताःकेतुहीना नवग्रहाः । रसाः ६ पञ्चेन्दवो १५ नागाः ८ शैलचन्द्राश्च १७ खेन्दवः १० । गोऽब्जाः १९ सूर्याः १२ कुनेत्राणि २१ समाः प्रद्योतनादयः। चतुष्कं त्रितयं तस्माच्चतुष्कं त्रितयं पुनः । यावत्स्वजन्मभं तावच्छिवादि कृत्तिकादितः ॥३॥



अत्र शिवादिता वा कृत्तिकादितश्चतुष्कनक्षत्रे रवेर्दशा ततस्त्रितयभे चन्द्रस्य दशास्यादेवमग्रेऽपि चिन्त्यम्। अथवा शिवादिता वा कृत्तिकादितो जन्मभं यावत्सङ्ख्या वसुभिस्तष्टा रव्यादीनामुक्तक्रमात्पाकाः स्युः ।

अथान्तर्दशासाधने मानसागरोक्तपद्यम् । दशा दशाहता कार्या नवभिर्भोगमाहरेत् । यल्लब्धं सो भवेन्मासस्त्रिंशन्निघ्नं दिनं भवेत् ॥

अत्रोपपत्तिः । अत्राष्टोत्तरशतपरमायुर्वशात्पूर्ववदनुपातेन मासात्मकान्तर्दशामानं $\left( \frac{\text{इद} \times \text{सद}\ १२}{१८०} \right) = \left( \frac{\text{इद} \times \text{सद}}{६} \right)$ शेषं मासादिजनितगुणगुणितं स्वहरेण भक्तं दिनादिकं भवेत्तेनापपन्नं सर्वम् ॥

## अत्रोपदशासाधने पद्यम् ।

**अन्तर्दशाऽहर्गण एव गुण्यः स्वमूलवर्षैरिभखेन्दुभक्तः । पुनः पुनः षष्टिगुणावशेषे दिनादयश्चोपदशाः क्रमोऽयम् ॥**

अत्र युक्तिः । पूर्ववदनुपातेन मासाद्यन्तर्दशान्तर्गतं विदशामानं वर्षात्मकं जातं $\left[ \frac{\text{इद} \times \text{सअं}}{१०८ \times १२} \right]$ एतन्मासकरणार्थं रविगुणं पुनस्त्रिंशद्गुणं दिनात्मकं जातम् $\left( \frac{\text{इद} \times \text{सअं} \times १२ \times ३०}{१०८ \times १२} \right)$ $= \left( \frac{\text{इद} \times \text{सअं}\ ३०}{१०८} \right)$ दिनावशेषात्षष्टिगुणो विहितः । अत्र खाग्निगुणितमासात्मकान्तर्दशामानं चान्तर्दशादिनगणः । तेनोपपन्नं सर्वम् ।



**अथ तत्रैव फलदशाकरणे पद्यम् । उपदशादिवसाः खरसाहता निजघटीसहिताः स्वदशाहता । वसुखचन्द्रहृता घटिकादयः फलदशा क्रम एव पुनः पुनः ॥**

अत्र युक्तिः । अधुनासाधितोपदशाया दिनं षष्टिघ्नं यत्तन्नाडिकायुतं तदा घट्यात्मकं स्यात्ततोऽनुपाताज्जातं फलदशामानं वर्षात्मकं $\frac{(\text{इद} \times \text{उददं})}{\text{१०८} \times \text{१२} \times \text{३०} \times \text{६०}}$ एतद्द्वादशगुणं तदा मासात्मकं स्यात्पुनः खाग्निगुणं दिनात्मकं पुनष्षष्टिगुणं घट्यात्मकमतो हरगुणसमापगमाज्जातम् [ $\frac{\text{इद} \times \text{उददं}}{\text{१०८}}$ ) तेन सर्वमुपपन्नम् ।

## अथ त्रिधा दशामानविषयविशेषोऽभिधीयते ।

अत्र प्रकारत्रयेण साधितदशामानेषु विंशोत्तरीमुख्याऽन्यद्वयं दशामानं गौडं गौरीजातकादिग्रन्थस्वरसात् । तथोक्तं लघुपाराशरीसमाख्यग्रन्थे "दशाविंशोत्तरी चात्र ग्राह्या नाष्टोत्तरी मता । तथान्यदपि " अष्टोत्तरी न सङ्ग्राह्या मारकार्थं विचक्षणैः । यत्तूक्तं "भवेदष्टोत्तरी कृष्णे शुक्ले विंशोत्तरी मता ' तदेकदेशीयपद्यमिति सुजनगणैर्निपुणं विभावनीयमित्यलं पल्लवितेन ॥

## अथ जैमिनसूत्रोक्तचरदशानयनोपायः ।

अत्र मेषादितस्त्रिभिस्त्रिभैश्चत्वारि विषमसमाभिधानि पदानि भवन्ति । विषमपदे भावोननिजेशलवाः । समपदे निजेशोनभावलवाः कार्याः । ते खाग्निभक्ताः फलं वर्षाणि । शेषं मासादिजनितगुणगुणितं हरेण विभक्तं मासादिकं स्यात् । तथोक्तं जैमिनसूत्रे "प्राचीवृत्तिर्विषमभेषु । परावृत्त्योत्तरेषु ॥ अथ भशब्देन पदग्रहणमिति तट्टीकाकारेण नीलकण्ठाभिधेन स्फुटं व्या-

ख्यातमेव । तथाचोक्तं बृहत्पाराशरहोरायाम् "ओजर्क्षाणां क्रमा-द्विप्र समानां व्युत्क्रमात्पुनः । नाथान्तेन समा ज्ञेया निर्विशङ्कं द्विजोत्तम ॥ मेषो वृषोथ मिथुनो तुलालिश्च धनुर्धरः । एतेषा-मोजसंज्ञास्यादब्दानां गणना क्रमात् ॥ कर्कः सिंहश्च कन्या च नक्रकुम्भझषा द्विज । एतेषां समसंज्ञा स्याद्वर्षाणां व्युत्क्रमा-द्विज ॥ यदुक्तं जैमिनसूत्रे । "नाथान्ताः समाः प्रायेण" अस्यार्थो व्याख्यायते । लग्नादिद्वादशभावानां मध्ये यद्भावपतिर्यत्र राशौ वर्त्तते तस्माद्भावात्तदीशावधि क्रमोत्क्रमगणनावशाद्याः संख्या-स्तास्तद्भावदशाः स्युः । परमेवं तदैव यदा भावखेटयोरन्तरे राशीनां पूर्तिस्तदन्यथा मदुक्तमेव बोध्यम् । अत्रेदमवधेयम् । वृश्चिकस्य द्वौ कुजकेतू स्वामिनौ तथा कुम्भस्य शनिराहू स्वा-मिनौ तयोरधिकबलो यः स एव ग्राह्यः । उच्चस्थे खेटे वर्षमेकं योज्यं नीचखेटे वर्षमेकं शोध्यं गणितागतवर्षात्तदा स्फुटव-र्षाणि भवन्ति । तदुक्तं बृहत्पाराशरहोरायाम् "वृश्चिकाधिपती द्वौ च कुजकेतू द्विजोत्तम् । स्वर्भानुपङ्गू कुम्भस्य पती द्वौ चि-न्तयेद्द्विज ॥ १ ॥ उच्चखेटस्य यद्भावे वर्षमेकं तु निक्षिपेत् । तथैव नीचखेटस्य वर्षमेकं त्यजेद्द्विज ॥ अत्रोदाहरणम् । वृष-लग्नं १ । ३ । २ । १ तदीशः शुक्रो राश्यादिकः ५ । ४ । ७ । ८ । अत्र लग्नस्य विषमपदगतत्वाद्वृषलग्नोनशुक्रलवा एते १२१ । ५ । ७ । खाग्निभक्ताः फलं ( ४ ) वर्षाणि । शेषं द्वादशगुणं १३ । १ । २४ । खरामभक्तं खमितो मासः । पुनः शेषं त्रिंशद्गुणितं ३६० । ४२ । ० खाग्निभक्तं फलं ( १२ ) दिनानि । पुनः शेषं

षष्टिगुणं ४२ । ० । ० । खाग्निभक्तं फलं [ १ ] घटिकाः । पुनः शेषं षष्टिघ्नं ७२० । ० । ० । खाग्निभक्तं फलं ( २४ ) पलानीति लग्नदशामानं वर्षादिकम् ४ । ० । १३ । १ । २४ । एवमन्यभावानामपि बोध्यम् । अत्रेदमवधेयम् । लग्नस्य प्रथमा दशा ततो धनादिभावानां दशा लेख्या तथा दशावर्षाणां समा द्वादशविभागा अन्तर्दशा स्यादेवं विदशादिकं चिन्त्यम् । अथवा दशा दशाहताः कार्याः सर्वभावदशावर्षयोगैर्विभक्ताः फलमन्तर्दशामानं सूक्ष्मं स्यादिति ।

## अथ गौरीजातकोक्तं नक्षत्रायुः करणे पद्यद्वयम् ।

परमायुः प्रमाणेन गुणयेद्गतनाडिकाः । नक्षत्रस्य हरेद्भागं नवत्याऽऽप्तं विशोधयेत् । १ । परमायुषि पुंसश्च शेषमायुः स्फुटं भवेत् । अस्यानुपाततः कार्या ग्रहस्य च दशास्तथा । २ ।

अत्रोपपत्तिः "प्रथमांशकजातानां परमायुः परिकीर्त्तितम्, द्वितीयांशकजातानां शतञ्च ( १०० ) परिकीर्त्तितम् । १ । समाशीतिस्तृतीयांशे [ ८० ] वर्षषष्टिश्चतुर्थके ( ६० ) । इति तत्रस्थपद्यागमप्रमाणात्सर्वनक्षत्रेषु यदाऽऽद्यचरणादौ जन्म भवेत्तदा विंशत्यधिकशतं परमायुः प्रमाणं भवति । एवं द्वितीयचरणादौ शतमितमेवमग्रेपि चिन्त्यम् । अत्राद्यचरणाद्द्वितीयचरणादौ षडंशानपरमायुस्तुल्यं परमायुर्दृश्यते । एवं तृतीयचतुर्थचरणादौ क्रमेण द्वित्रिगुणेन षडंशेन विहीनं परमायुः । तदन्तरे चानुपातादायुः साधनं तत्र नक्षत्रभोगमानं स्थूलं षष्टिमितं

स्वीकृत्योच्यते, यदि पञ्चदशघटीमितेनाद्यचरणेन परमायुः षडंशसमापचयस्तदा भयातेन किमिति स्वरूपम् $\left(\frac{\text{१२०}}{\text{६} \times \text{१५}}\right)$ भया. हरघाते कृते जातं $\left(\frac{\text{१२० भया}}{\text{९०}}\right)$ परञ्चेदं विंशत्यधिकशतमितपरमायुषि शोध्यं तदेष्टायुः प्रमाणं भवतीति सर्वमुपपन्नम् ॥

**अथायुः साधने मदुक्तपद्यम् । भयातनाड्यो गुणिताः समुद्रैर्भक्तास्त्रिभिः प्राप्तफलं विशोध्यम् । खयुग्मचन्द्रेभ्य इहावशेषं स्फुटायुरेवं विबुधैर्विभाव्यम् ॥**

अत्रोपपत्तिः । पूर्वानीतफलस्वरूपम् $\left(\frac{\text{भया १२०}}{\text{९०}}\right) = \left(\frac{\text{भया ४}}{\text{३}}\right)$ तेनोपपन्नं सर्वम् । अत्रेदमवधेयम् । कथितरीत्याऽऽनीतं स्फुटायुः प्रमाणं यत्तदेव परमायुः प्रमाणं प्रकल्प्य "आयुः षडंशो भृगुजस्य वर्षमित्यादिना" खेटानां दशामानानि कृत्वा ततस्तद्दशामानं स्फुटायुः प्रमाणञ्च मत्वा कथितरीत्याऽन्तर्दशामानानि साध्यान्येवं विदशादिकमपि बोध्यम् ॥ परमायुः प्रमाणाद्यद्दशादिकमुक्तं तन्नक्षत्रादिजन्मवताम् ॥ एतदर्थस्य वासनासिद्धत्वादनेकगौरीजातकादिजातकग्रन्थप्रमाणाच्च । अत्र गौरीजातकप्रतिभारूपं भावप्रकाशस्थपद्यद्वयम् ॥



**स्फुटायुः षष्ठांशः कविरिह कवेर्विंशतिलवप्रमाणोनः शुक्रः शनिरपि तदूनः शनिरगुः । तदूनो-**

ऽगुः सौम्यो बुध उत तदूनो गुरुरगोस्त्रिभागोऽर्क-श्चन्द्रः कविदलसमः सद्भिरुदितः ॥ बुधचन्द्रान्त-रं केतुः कुजोऽपि शिखिना समः । एवमन्तर्दशाज्ञेया ततोऽप्यन्यानुपाततः ॥ २ ॥

अत्र चक्रार्धहान्यादिकमपि कार्यम् ॥

अथ वर्षप्रवेशे मुद्दादशानयने पद्यम् ॥ जन्मर्क्ष-संख्या सहिता गताब्दा द्व्यूनिता नन्दहृताऽवशेषात् । आचङ्कुराजीशबुकेशुपूर्वा मुद्दादशा स्यात्किल वर्ष वेशे ॥ १ ॥

अत्र युक्तिः ॥ जन्मसमये जन्मनक्षत्रवशेन पूर्वविधिना यो विंशोत्तरीसमाख्यपाकेशः खेटस्तस्यैव वर्षारम्भकालिकदशार-म्भोपि समुचित एव, तत एकद्वित्र्यादिगतवर्षवृद्ध्या जन्मद-शेशखेटादारभ्य दशानाथक्रमादब्दारम्भकालिकदशेशाः स्युस्त-थाचोक्तं गौरीमतमुक्तावल्याम् ॥ जन्मनक्षत्रतः प्रोक्ता दशा गौरी-मताह्वया । सूर्येन्दुकुजराह्वीज्यशनिज्ञशिखिभार्गवाः । दशेशा वह्निभाद्बोध्याः क्रमाश्च परिवर्त्तनात् ॥ तेन कृत्तिकादिजन्मर्क्षग-ताब्दसंख्यायोगसमं जन्माब्ददशेशयोगवृन्दं जातम् ॥ परञ्चाश्वि-न्यादिजन्मर्क्षसंख्याग्रहणात्तद्योगवृन्दं द्व्यधिकमागतम् । तद्द्व्यू-नंयोगवृन्दं स्यादत्र नवाधिकप्रयोजनाभावान्नवतष्टमित्युपपन्नं सर्वम् ॥ अत्र बालावबोधार्थमुदाहरणम् ॥ कृष्णदत्तस्य जन्मशक-

स्त्रिनगाद्रिभूमितः [ १७८३ ) ग्रन्थारम्भशकः कृतेन्दुष्टभूमितः ( १८१४ ) तयोरन्तरसमं गताब्दवृन्दं भूम्यग्निमितंजातम् (३१) तदश्विन्यादिजन्मर्क्षमघासंख्यया खचन्द्रमितया [ १० ] युतं जातं चन्द्रवेदमितम् ( ४१ ) तन्नेत्रोनं रूपोनचत्वारिंशत्समं जातम् (३९) एतन्नवहृतं शेषं रामसमं ( ३ ) तेनास्मिनब्दारम्भे कुजदशाभवेत्। अत्रेदमवधेयम्। कथितरीत्या वर्षारम्भे यः खेटः प्रथमदशेशस्तद्दशादिनानि वर्षनक्षत्रभुक्तभोग्यघटीहतानि भभोगघटीविभक्तानि द्विधाऽप्तं यद्भुक्तंभोग्यं तत्र भोग्यं प्रथमं ततोन्यखेटानां दशाप्रमाणमधोधस्तथा सर्वान्ते भुक्तघटीभवं दिनाद्यं लिखेत्तथाचोक्तं हायनरत्ने गौरीमतोक्तस्य दशाक्रमस्य दशादिमा या भवशादुपेता। सा भुक्तभोग्यर्क्षघटीविनिघ्नी सर्वर्क्षनाडीविहृता दिनाद्यम् ॥ द्विधा यदाप्तं त्विह भुक्तभोग्यं तस्य ग्रहस्यैव लिखेदधस्तात् ॥ दशाप्रमाणं परतो ग्रहाणां यथास्थमग्रे विलिखेदधोऽधः। प्रान्ते पुनर्भुक्तघटीसमुत्थं दिनाद्यमाद्यस्य लिखेत्खगस्य ॥ अत्रोदाहरणम् ॥ कृष्णदत्तस्य कल्पिताब्दकालिकरोहिणीनक्षत्र भुक्त घटिका ( २ । ३ ) भोग्यघटिकाः ( ५७ । ६ ) तत्र पूर्वविधिना चन्द्रदशा जाता। ततो वक्ष्यमाणतद्दिनानि (३०) सवर्णित भुक्तघटीमानेनानेन ( १२३ ) हतानि ( ३६९० ) सवर्णितसर्वर्क्षघटीमानेन ( ३४२६ ) भक्तानि जातानि चन्द्रदशादिनानि भुक्तानि ( १ । ५ ) तत्सम्पूर्णदशामानाद्विशोध्य भोग्यदिनानि ( २८ । ५५ ) तदाद्यं ततो भौमादिरव्यन्तानां दशाप्रमाणं पुनः प्रान्ते भुक्तदिनाद्यं ( १ । ५ ) विलिखेत् ॥

अत्रत्यदिनात्मकदशाबोधने पद्यम् ॥ महादशाब्दास्त्रिगुणादिनानि दशाप्रमाणं रवितो ग्रहाणाम् ॥ दशा शुभानां शुभदा भवेद्धै पापग्रहाणां किल कष्टदात्री ।

अत्र पूर्वार्धोपपत्तिः ॥ खार्कमितपरमायुः प्रमाणेन स्वस्वमहादशावर्षप्रमाणं तदैकवर्षपरमायुः प्रमाणेन किमिति जातम् $\left(\frac{\text{मद १}}{१२०}\right)$ तत्खरसाग्निहतं दिनात्मकं भवेदिति स्वरूपम् $\left(\frac{\text{मद १२} \times ३०}{१२०}\right) = (\text{मद ३})$ तेनोक्तमेव तथ्यम् ॥

अथ निष्पन्नदिनबोधने मदुक्तपद्यम् ॥ अष्टादशाभ्राग्नय इन्दुयुग्मं कृतेषवो नागकृता नगाब्धाः । चन्द्रेषवो भूद्विमिताश्च षष्टिः सूचङ्कुराजीशबुकेशुपाकाः ॥



अत्र मुद्दादशाचक्रम् ।

| र | चं | कु | रा | जी | श | बु | के | शु |
|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | १ | १ | १ | १ | ० | २ |
| १८ | ० | २१ | २४ | १८ | २७ | २१ | २१ | ० |

अत्रेदमवधेयम् । यद्यष्टोत्तरीदशामानवशान्मुद्दादशामानमभीष्टं तदा वसुहृतेतिविशेषः । अत्रत्यजन्मकालिकदशेशरीत्या दशेशगणना कार्येति ।

अथाष्टोत्तरीजनितदिनात्मकमुद्दादशानयनाय मदुक्तपद्यम् ।

महादशाब्दा निहताः खचन्द्रैर्भक्तास्त्रिभिर्वारमुखादिमुद्दा । भवेत्किलेत्थं वदतीह युक्त्या श्रीकृष्णदत्तो गणकप्रवीणः ॥

अत्र युक्तिः ॥ अष्टोत्तरशतपरमायुर्वशात्पूर्ववन्मुद्दादशामानं वर्षादिकं जातम् $\left(\frac{\text{मद १}}{\text{१०८}}\right)$ तद्दिनकरणार्थं खरसाग्निगुणं जातम् $\left(\frac{\text{मद १२} \times \text{३०}}{\text{१०८}}\right) = \left(\frac{\text{मद १०}}{\text{३}}\right)$ तेनोपपन्नं सर्वम् ॥

अथ निष्पन्नदिनद्योतने मदीयपद्यम् ।

नखाः खेषवोष्टाश्विनः शत्रुबाणा रसाग्निप्रमा नागबाणा द्विवेदाः । खशैलाश्च मुद्दादशावासरेशा रवीन्द्वारविच्छौरिजीवागुशुक्राः ॥

अथ मुक्तावल्यां तृपताकिचक्र विचारे पद्यानि ।

रेखात्रयं तिर्यगधोर्ध्वसंस्थमन्योन्यविद्धाग्रगमेककोणात् । स्मृतं बुधैस्तत्तृपताकिचक्रं प्रागमध्यरेखाग्रगवर्षलग्नात् ॥ १ ॥ न्यसेद्भचक्रं किल तत्र सैका गताब्दसंख्या विभजेन्नगैः । शेषोन्मिते जन्मगचन्द्रराशेस्तुल्ये च राशौ विलिखेच्छशाङ्कम् ॥२॥ परे चतुर्भाजितशेषतुल्यस्थानेस्वराशेः खचरास्तु लेख्याः । स्वर्भानुविद्धे हिमगौ त्वरिष्टं पातार्किविद्धे रुगिणो भवन्ति ॥ ३ ॥ महीजविद्धे तु शरीरपीडा शुभैश्च विद्धे बहुसौख्यलाभः । शुभाशुभव्योमगवीर्यतोऽत्र फलं च वर्षस्य वदेत्सुधीमान् ॥ ४ ॥ एत-

दर्थो व्याख्यायते ।। रेखात्रयं तिर्यक् याम्योत्तररूपं तथोऽर्ध्व-
संस्थं पूर्वापररूपं च विलिखेत ।। एककोणादन्योन्यविद्धाग्रगं
परस्परसंलग्नपूर्वापरयाम्योत्तररेखाद्वयप्रान्तगतं रेखात्रयं नेयम् ।
एवं कोणचतुष्टयवशाद्रेखात्रयनिवेशेनार्कमिता रेखा भवेयुरिति
चक्रे विलोक्यम् ।। बुधैरेतच्चक्रं धृतिमितरेखानिर्मितं तृपता-
किसमाख्यं कृतम् । तत्र चक्रे प्राग्मध्यरेखाग्रगवर्षलग्नात् । पूर्व-
विहितपूर्वापररेखात्रयमध्यगतरेखाग्रे वर्षलग्नराशिसंख्यां निवे-
श्य तत एकोत्तरवृद्ध्यार्कमितं तच्चक्रं न्यसेत् । गताब्दसंख्याः
सैका नभोगैर्नवभिर्विभजेच्छेषोन्मिते तुल्ये राशौ शेषसंख्यातु-
ल्यराशौ जन्मगतचन्द्रराशेर्जन्मकालिकचन्द्राधिष्ठितराशितोऽग्रे
किन्तु जन्मकालिकचन्द्राक्रान्तराशिं गृहीत्वा शेषसंख्यामग्रे
निपात्य यद्राशौ तत्पूर्तिस्तद्राशौ जन्मकालिकचन्द्राक्रान्तरा-
शिसंख्यारूपोनशेषसंख्यायोगसमराशावितियावच्छशाङ्कं वि-
लिखेत् । शून्यशेषे चन्द्राधिष्ठितराशेरारभ्य नवमराशौ चन्द्रो-
लेख्यः । यत्तु कैश्चिदुक्तं जन्मगचन्द्रराशिमपहाय शेषसंख्या
निपातराशौ चन्द्रो विलेख्यस्तन्मते रूपशेषे जन्मगचन्द्रराशे-
रग्रे चन्द्रो जात एतदर्थस्य वासनाबहिर्भूतत्वात्प्रमाणशून्यत्वाच्च
तन्मतं समोचीनं न स्यादिति मन्मतं सुजनगणैर्मध्यस्थधिया
निपुणं विभाव्यम् । अपरे खचराश्चन्द्रातिरिक्तखेटाः स्वराशेर्ज-
न्मकालिकग्रहाधिष्ठितराशितश्चतुर्भाजितशेषतुल्यस्थाने चतु-
र्भाजितसैकगताब्दशेषसङ्ख्यातुल्यराशौ तु शब्दाच्चन्द्रवत्स्था-
प्याः । अत्रेदमवधेयम् । जन्मकालिकस्वस्वराशिसङ्ख्यारूपो-
नशेषसङ्ख्यायोगो द्वादशाधिकस्तदा द्वादशतष्टयोगराशौ
मेषादितः खेटा लेख्यास्तथा स्वस्वशून्यशेषे जन्मकालिकस्व-
स्वराशिमारभ्य चतुर्थराशौ सर्वे खेटा लेख्या एतदर्थस्य वास-
नाविहितत्वादिति । हिमगो चन्द्रे स्वर्भानुविद्धे राहुवेधेऽरिष्टं

पातार्किविद्धे केतुशनिवेधे चन्द्रे रुगिणो भवन्ति । कुजविद्धे चन्द्रे शरीरपीडा स्यात् । शुभखेटवेधे चन्द्रे बहुसौख्यलाभः स्यात् ।

अत्र 'चन्द्ररेखास्थितखेटैश्चन्द्रस्य वेधलक्षणं किन्तु चन्द्रादेव सर्वखेटानां वेधविचारोविधेयो यतो मनस्तु चन्द्रः ॥

अत्रोपपत्तिः। आगमप्रमाणेन जन्मसमये शून्यगताब्दे जन्मकालिकचन्द्राक्रान्तराशौ चन्द्रः कल्प्यस्तेन सैकगताब्दसमराशिगतचन्द्रो दृष्टस्ततः सैकगताब्दैकोत्तरवृद्ध्या जन्मकालिकस्वगृहादारभ्यैकद्वित्र्यादिराशौ चन्द्रो लेख्यः परञ्चैवन्नवमराशिं यावदर्थात्सैकगताब्देनवप्रमे । यदासैकगताब्दो दशमितस्तदा पुनर्जन्मकालिकराशावेव चन्द्रः कल्प्यस्तेन सैकगताब्दस्य नवाधिकप्रयोजनाभावाद्गताब्दो नवतष्टस्तेनोपपन्नं चन्द्रस्थापनम्। परखेटास्तु यदा सैकगताब्दो वेदमितस्तदा जन्मकालिकस्वगृहादारभ्य चतुर्थराशौ लेख्याः । यदा सैकगताब्दः शरमितस्तदा पुनर्जन्मकालिकस्वराशिगता भवन्ति तेनात्र सैकगताब्दवेदाधिकप्रयोजनाभावाद्वेदतष्टः सैकगताब्दस्तेनोपपन्नं चन्द्रातिरिक्तखेटस्थापनम्। अत्र बालावबोधार्थमुदाहरणम्। (तर) (कच) (क्रोद) रेखात्रयं तिर्यक् । (डंजा) (कुत्त) (शनवि) रेखात्रयं पूर्वापरम् । (श्रद) (कुत्त) (डंर) कोणाख्यंरेखात्रयं कार्यम् । एवमेवमन्यकोणानामपि प्रत्येकं रेखात्रयं कार्यम्। कृष्णदत्तस्य वर्षप्रवेशकालिककलितलग्नराशिर्मृगाख्यस्तेन (१०) दिग्मिताङ्कं (कुत) रेखायाः (कु) बिन्दौ विलिख्य ततः (श्र) बिन्दौ भचक्रपूर्त्तिरिति बोध्यम् । ग्रन्थारम्भगताब्दा एकत्रिंशन्मिताः (३१) सैका द्वात्रिंशन्मिता (३२) जाताः। एते नवतष्टा बाणमिता (५) स्तेन चन्द्राक्रान्तसिंहराशिसंख्याया रूपोनशेषस्य च योगराशौ

कार्मुकाख्ये [ श्र ] बिन्दुनिष्ठे चन्द्रो लेख्यः । अथ सैकगताब्दा वेदतष्टाः शून्यसमास्तेन जन्मकालिकस्वस्वराशिसंख्याया एकोनवेदमितशेषस्य च योगराशौ सर्वे खेटा लेख्या इति कृते रविसितबुधा एणास्ये कुजराहू वृश्चिके गुरुमन्दौ सिंहे केतुर्वृषे चेति द्रष्टव्यं तृपताकिचक्रम् ।




अत्रेन्दुनासह राहुभौमयो स्तथा केतोस्तिर्यक् । गुरुमन्दयोश्चोर्ध्वाधरो वेधः ॥

अथ मासवेशे मुद्दादशानयने मदीयपद्यम् ।

वर्षे प्रजाताः किल पाकवाराः सूर्यैर्विभक्ताः सकलग्रहाणाम् । मुद्दाख्यपाका इह मासवेशे भवन्ति चेत्थं गणकैर्विभाव्यम् ॥

अत्र युक्तिः । यदि द्वादशमासैरब्दभवपाकवारास्तदैकमासेन क इत्युपपन्नंसर्वम् ।

अथ निष्पन्नघट्यात्मकदशाबोधने मदीयपद्यम् ।

खखेटाः खबाणेन्दवो चाभ्रचन्द्राः खशैलाब्धितुल्याः खवेदाब्धितुल्याः शराष्टाब्धितुल्याः शरेष्वब्धितुल्याः शराभ्रेन्दवः खाभ्ररामाश्च नाड्यः ॥



अत्र वर्षभवपाकाः पञ्चगुणा मासवेशे नाडिकात्मकपाका एते पठिता इति ॥

अथ दिनवेशे दशानयने मदीयपद्यम् ॥

शरजपाकवासराः खचन्द्रताडिताः स्फुटाः । दिनप्रवेश इत्यलं विनाडिका दशा मताः ॥

अत्रोपपत्तिः । समामानैः खरसाग्निदिनैः स्वस्ववर्षभवपाकवासरास्तदैकदिनेन क इति जातम् (१८)/३६० एतत्खरसाग्निगुणं पलात्मकं दशामानं स्यादतो हरगुणयोस्समत्वान्नाशे कृते जातं दशघ्नवर्षजदशामानसमं पलात्मकदशामानं दिनवेशे तेनोपपन्नं सर्वम् ।

**अथ ग्रहाणां तसीराभिधदशा मुक्तावल्याम् ।**

**ये वर्षमासदिनलग्ननिरीक्षकाः स्यु स्ते तत्र तन्मितदशापतयो न चान्ये । आद्या दशाधिकदशाश्च ततस्तदूनस्येति क्रमेण विबुधाः प्रभवन्ति वर्षे । १ । पृथक् पृथक् दृष्टिकलादिकेन वर्षादिसङ्ख्याद्युमुखं निहन्यात् । भजेद्दृगैक्येन च तन्मतेन लब्धं दशाहाद्युमुखेन नाड्यः ॥**

**अथ तसीरदशा दृष्टिदशा बोध्येत्यन्यत्सुगमम् ।**

१ अत्रोपपत्तिः । लग्ननिरीक्षकखेटदृष्टियोगेन खरसाग्निदिनानि लभ्यन्ते तदा स्वस्वदृष्टिकलाभिः कानीति जातम् [ $\frac{३६० \text{ स्वदृ}}{\text{दृयो}}$ ] तेनोपपन्नं सर्वम् । अत्रेदमवधेयम् । मासवेशाङ्गनिरीक्षकखेटदृष्टियोगेन मासदिनादि खाग्निमितानि तदा स्वस्वदृष्टिकलाभिः कतिदिनान्येवं मासवेशे दशादिनानि । दिनवेशे तु दशानयनार्थमनुपातस्तद्यथा दिनवेशाङ्गनिरक्षकखेटदृष्टियोगेन षष्टिघटिकास्तदा स्वस्वदृष्टिकलाभिः का इति घटिकाद्यं दशामानमित्युपपन्नं सर्वम् । अत्रोदाहरणम् । कृष्णदत्तस्य कल्पितवर्षलग्ननिरीक्षकानां रविचन्द्रभौमानां "अपास्य पश्यन्निजदृश्यखेटात् इत्यादिना लग्नोपरि दृष्टिकलाः र १ । २ चं ३ । १ भौ २ । ३ एतद्योगेनानेन ६ । ६ सवर्णितेन [ ३६६ ] खरसाग्निगुणितं रविदृष्टिकलामानं भक्तं जातम् $\left(\frac{३६० \times ६२}{३६६}\right)$ $= \left[\frac{१० \times ६२}{६१}\right] = \left[\frac{६२०}{६१}\right]$ फलं [ १० ] दिनं शेषं [ १० ] षष्टि

गुणं स्वहरेण भक्तं फलं घटीरूपं ( ६ ) शेषादस्मात् [५९] पूर्ववत्फलं पलरूपम् ( ५० ) एवं चन्द्रभौमयोरपि बोध्यम् । मासदिनवेशयोः क्रमेण खाग्निसमं तथा षष्टिसमं प्रमाणफलं प्रकल्प्यान्यत्सर्वमुक्तवदिति । अत्र प्रवेशत्रयेऽपि यस्य खेटस्य दशामानमधिकमागच्छति । तद्दशामानं प्रथमं ततस्तन्न्यूनक्रमेण दशामानं लेख्यमिति ॥

**अथ मिथिलादेशीयोदयपलद्योतनायै कस्यचित्पद्यम् ।**

**अष्टेन्दुपक्षाः शशिबाणपक्षा गुणाभ्ररामा गुणवेदरामाः । शैलाब्धिरामा वसुरामरामाः क्रमोत्क्रमान्मेषतुलादिमानम् ॥**

अत्रोपपत्तिः । "लङ्कोदया विघटिका गजभानि गोऽङ्कदस्रास्त्रिपक्षदहनाः क्रमगोत्क्रमस्थाः" इति ग्रहलाघवोक्तपद्येन लङ्कोदयपलानि २७८ । २९९ । ३२३ । ३२३ । २९९ । २७८ । अत्र मिथिलादेशीयपलभामानं षडङ्गुलं वर्त्तते ततो "दिङ्नागसत्र्यंशगुणैर्विनिघ्नी" इत्यादिना पलात्मकं चरमानं ६० । ४८ । २० । अत्र सिद्धान्तरीत्या प्रथमचतुर्थपदयोश्चरोनं निरक्षोदयमानं शेषपदद्वये चरयुतं लङ्कोदयमानं स्वदेशोदयमानं भवतीति जातम् । २१८ । २५१ । ३०३ । ३४३ । ३४७ । ३३८ । तेनोपपन्नं सर्वम् ॥

**अत्र चरमानद्योतनाय मदीयपद्यावतारः ।**

**चरोद्भवास्त्वत्र विनाडिकाः स्युष्षष्टिर्भुजङ्गा-**

ङिघमिताः खयुग्मम् । क्रमोत्क्रमस्था मिथिलाख्यदेशे श्रीकृष्णदत्तो वदति स्वयुक्त्या ॥

अत्रोपपत्तिः पूर्वकथितैवेति बोध्यम् ।

अथ शतपदचक्रबोधने मदुक्तपद्यानि ॥ चूचेचोला वर्णा दास्रं लीलूलेलोवर्णा याम्यम् । आईऊए वर्णानलभम् । ओवावीवूवर्णाः कर्क्षम् ॥ १ ॥ वेवोकाकीवर्णाश्चान्द्रं कूघाङछा रौद्रर्क्षं वै । केकोहाहीवर्णादित्यं हूहेहोडा जीवर्क्षं वै ॥२॥ डीडूडेडोवर्णाः सार्पं मामीमूमेवर्णाः पैत्र्यम् । मोटाटीटूवर्णा भाग्यं टेटोपापीवर्णार्यम्णम् ॥ ३ ॥ पूषाणाठा वर्णाः करभं पेपोरारी वर्णास्त्वाष्ट्रम् । रुरेरोतावातर्क्षं वै तीतूतेतो वर्णा राधा ॥ ४ ॥ नानीनूने वर्णा मैत्रं नोयायीयूवर्णा ज्येष्ठा । येयोभाभीवर्णा मूलं भूधाफाढा वर्णा आप्यम् ॥ ५ ॥ भेभोजाजीवर्णा वैश्वं जूजेजोखा वर्णा विधिभम् । खीखूखेखोवर्णा हरिभं गागीगूगेवर्णा वसुभम् ॥ ६ ॥ गोसासीसूवर्णाः शतभं सेसोदादीवर्णाः पूभा । दूथाझाञावर्णाश्चोभा देदोचाचीवर्णाः पूषा ॥ ७ ॥ ह्रौह्रीस्वरावत्र सजात्यकौ यौ तुल्यौ तथा चेस्वरवद्दकारः । ववौखषावत्र सशौ च तुल्यौ संयोगवर्णे प्रथमार्ण एवम् ॥ ८ ॥ न सन्ति

वर्णा ङञणाः प्रसिद्धा नामाद्यवर्णेषु यतो नराणाम् । क्रमेण योज्या गजडास्तु तत्र बोध्यं सदेत्थं स्वरशास्त्रविद्भिः ॥ ९ ॥ छघौ षठौ थभौ बुधैः फधाढवर्णकास्तथा । स्वरैस्तु सन्ति ते समा विचिन्त्यमित्यलं ध्रुवम् ॥ १० ॥

अत्र युक्तिः । तत्र तावत्स्वरशास्त्रे ( अआइईउऊऋॠऌॡएऐओऔअंअः ) एते षोडशमिताः स्वराः प्रोक्ताः सन्ति । तासु षोडश स्वरेषु द्वावन्तिमौ ( अंअः ) त्याज्यौ तथा ( ऋॠऌॡ ) चत्वारो नपुंसकाख्याः स्वराश्च त्याज्याः शेषाणां दश स्वराणां ( अआइईएऐओऔ ) एतेषां साजात्येषु द्विद्विकेषु प्रथमाख्यमेकैकमेव ग्राह्यं ते च ( अइउएओ ) पञ्चस्वराः प्रसिद्धाः । तत्किमर्थं तदुच्यते । अकारः प्रथमो वासुदेवस्तत्प्रधानत्वात् अकारएवाद्यो गृहीतः इकारस्तु लक्ष्मीवासुदेवस्य प्रिया अत इकारो गृहीतः । उकारो रुद्रः । एकारः सूर्यः । ओकारश्चन्द्रः । अथवा अकारादिपञ्चस्वरागन्धादिमुख्यगुणाः पृथिव्यादिपञ्चभूतानां सन्ति । तथा हि धरायाः(अ)कारगन्धगुणः । जलस्य ( इ ) काररसगुणः । अनलस्य ( उ ) कारो रूपगुणः । वातस्य ( ए ) कारः स्पर्शगुणः । खस्य (ओ) कारः शब्दगुणः । तथा च अकारेण यत्फलं तदेवाकारेणापि बोध्यम् । एवमिकारादावपि फलं बोध्यम् । तथा चोक्तं नरपतिजयचर्याख्यस्वरशास्त्रे "मातृकायां पुरा प्रोक्ताः स्वराः षोडशसङ्ख्यया । तेषां द्वावन्तिमौ त्याज्यौ चत्वारश्च नपुंसकाः ॥ १ ॥ शेषादशस्वरा-

स्तेषु स्यादेकैकौ द्विके द्विके। ज्ञेया अत्र स्वराद्यास्ते स्वराः पञ्च-स्वरोदये ॥ ३ ॥ अकाराद्याः स्वराः पञ्च ब्रह्माद्याः पञ्चदेवताः । निवृत्ताद्याः कलाः पञ्च इच्छाद्यं पञ्चशक्तिकम् ॥ ४ ॥ मायाद्याश्चक्रभेदाश्च धराद्यं भूतपञ्चकम् । शब्दादिविषयास्ते च कामबाणा इतीरिताः ॥ ५ ॥ अथ स्वराणां प्रधानत्वं तत्रैवोक्तम्" स्वरादिमातृकोच्चारो मातृव्याप्तं जगत्त्रयम् । तस्मात्स्वरोद्भवं सर्वं त्रैलोक्यं सचराचरम् ॥ १ ॥

अथ प्रस्तुतमुच्यते । तत्र स्वरशास्त्रे शतपदचक्रविचारः । "चक्रं शतपदं वक्ष्ये भपाद्याक्षरसम्भवम् । नामादिवर्णतो ज्ञेया ऋक्षराश्यंशकास्तथा ॥ २ ॥ तिर्यगूर्ध्वगता रेखा रुद्रसंख्या लिखेद्बुधः । जायते कोष्ठकानां तु शतमेकं न संशयः ॥ २ ॥ न्यसेद्वकहडादीनि रुद्रादि विदिशि क्रमात् । पञ्चपञ्च क्रमेणैव शुद्धवर्णान्नियोजयेत् ॥ ३ ॥ पञ्चस्वरसमायोगादेकैकं पञ्चधा कुरु । कुर्यात्कुपुभुदुस्थाने त्रीणि त्रीण्यक्षराणि च ॥ ४ ॥ कुघङछसमाःस्तम्भे रौद्रेत्वीशानगोचरे । पूषणठसमाःस्तम्भे हस्ते आग्नेयसंज्ञके ॥ ५ ॥ धफढाः प्रथमाषाढेस्तम्भे नैर्ऋत्यगोचरे । दुस्थाने थझञा वायौ स्तम्भ उत्तरभाद्रके ॥ ६ ॥ आर्द्राहस्तस्तथाषाढपूर्वोत्तरपदाभिधे । एवं स्तम्भचतुष्कं च ज्ञातव्यं स्वरवेदिभिः ॥७॥ धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः । साभिजित्यंशकास्तस्य शतैकं द्वादशाधिकम् ॥ ८ ॥ एतदर्थो व्याख्यायते । चतुर्दिक्षु ईशानादिकोष्ठमादिमंकृत्वा पञ्च पञ्च कोष्ठेषु अवकहडादीन् वर्णान्विन्यसेत् । अवकहडा ईशाने ।

मटपरता आग्नेयकोष्ठपञ्चसु । नयभजखा नैर्ऋत्यादिपञ्चसु कोष्ठेषु । गसदचला वायव्यादिकोष्ठेषु पञ्चसु । पुनः किंकुर्यादित्याह । पञ्चस्वरेति । अइउएओ पञ्चस्वरैः सह अवकहडादीनां पञ्चवर्णानां पृथक् पृथक् पञ्चभिः स्वरैः संयोगं कुर्यात् । ततो अवकहडादीनामादौ अकार एव वर्णरूपस्तस्य पञ्चभिः स्वरैः संयोगे पञ्चस्वरा एव भवन्ति । अइउएओ । अकारात्परो वकारः पञ्चस्वरैः संयोगे वविवुवेवो पञ्चधा जाताः । वकारात्परः ककारस्तस्य पञ्चस्वरसंयोगे ककिकुकेको इति पञ्च । ककारात्परस्य हकारस्य पञ्चस्वरसंयोगे हहिहुहेहो पञ्चधा जाताः । हकारात्परस्य डकारस्य पञ्चस्वरसंयोगे डडिडुडेडो पञ्चधा जाताः । एवं कृते अवकहडादीनां पञ्चविंशतिसङ्ख्या जाताः । एवं मटपरतादीनां वह्निमुखस्थितानां पृथक् २ पञ्चविंशति ( २५ ) स्वरवर्णयुतैः सङ्ख्या जायते । एवमवर्णानां शतसंख्या भवन्ति ॥ कुपुभुदुस्थान इति । कुवर्णस्य निकटे घङछास्त्रयो वर्णाः स्थाप्याः, पुवर्णस्थाने षणठाः । भुवर्णस्थाने धफढाः । दुवर्णस्थाने थझञाः ॥ धफढाः प्रथमेति ( ६ ) आर्द्राहस्तेति । एवं स्तम्भचतुष्कमिति । पूर्वपदं च उत्तरपदं च ते पूर्वोत्तरपदे ते प्राक् यस्याषाढस्य ते पूर्वाषाढोत्तराषाढे नक्षत्रे एतच्चतुष्कं स्तम्भनक्षत्रं सर्वत्र बोध्यम् ॥ ७ ॥ अथ द्वादशाधिकशतवर्णैः किं कुर्यादित्याह । धिष्ण्यानि कृत्तिकादीनीति । अइउएओ वविवुवेवो ककिकुकेको हहिहुहेहो डडिडुडेडो । एषां पञ्चविंशतिवर्णानां चतुर्भिश्चतुर्भिर्वर्णैः कृत्तिकादीनां भानां चरणा अंशाख्याः कल्प्याः ।

तत्र अइउएवर्णाश्चत्वारः क्रमेण कृत्तिकाचरणाः। ओवाविवुवर्णा रोहिणीचरणाः। वेवोककिवर्णामृगशिरश्चरणाः। पश्चात् कुव-र्णस्य घङछावर्णा दत्ताः। तैश्चतुर्भिर्वर्णैरार्द्रानक्षत्रस्य चरणाः। केकोहहिपुनर्वसुचरणाः। हु हे हो डा वर्णाः पुष्यचरणाः। डि डु डे डो वर्णा आश्लेषानक्षत्रस्य चरणाः। एवं यमादिदिक्स्थितै-र्वर्णैस्तरभभववर्णयुतैर्मघादीनां भानां साभिजितानां चरणाः प्रोक्ताः सन्तिः। भपादवर्णा एवांशकाः शतपद चक्रे स्वस्वकष्टे निष्ठाः सन्ति। एव जातं शतपदचक्रम्।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अ | व | क | ह | ड | म | ट | प | र | त |
| इ | वि | कि | हि | डि | मि | टि | पि | रि | ति |
| उ | वु | कु घ ङ छ | हु | डु | मु | टु | पु ष ण ठ | रु | तु |
| ए | वे | के | हे | डे | मे | टे | पे | रे | ते |
| ओ | वो | को | हो | डो | मो | टो | पो | रो | तो |
| न | य | भ | ज | ख | ग | स | द | च | ल |
| नि | यि | भि | जि | खि | गि | सि | दि | चि | लि |
| नु | यु | भु ध फ ढ | जु | खु | गु | सु | दु थ झ ञ | चु | लु |
| ने | ये | भे | जे | खे | गे | से | दे | चे | ले |
| नो | यो | भो | जो | खो | गो | सो | दो | चो | लो |

अत्रेदमवधेयम् । शतपदचक्रे बवौ वर्णौ तुल्यौ सदृशौ बोध्यौ । तथा शसौ तथा च खषौ तुल्यौ । अर्थात् पवर्गस्थ ( ब ) कारस्थाने वर्णमालान्त्यस्थो ( व ) कारः । तथा ( स ) कारस्थाने ( श ) कारः । तथा ( ख ) स्थाने ( ष ) कारः । यथा बलदेव इति नाम्नि सति शतपदचक्रे पवर्गस्थ ( ब ) कारदर्शनाभावादत्र ( ब ) कारस्थाने वर्णमालान्त्यस्थस्य [ व ] कारस्याङ्गीकाराद्भं बोध्यम् । एवं शिव इति नाम्नि [ स ] कार ग्रहणाद्भं बोध्यमिति भावः । एवं [ खषौ ] परस्परवर्णाविति यदुक्तं तत्तु शतपदचक्रातिरिक्तविषये शतपदचक्रे [ ष ] कारस्य दर्शनात् । एवं यस्य नाम्नि संयोगाक्षरस्तत्राद्यवर्णो ग्राह्यः । यथा प्रद्युम्ने नाम्नि प्रथमवर्णो ( प ) कारस्तस्माद्भं वदेत् । एवं प्रियवचेत्यादौ [ प ] कारः । द्रुपदेत्यादौ दुकाराद्भमेवं सर्वत्र युक्तवर्णे बोध्यम् । अथ यस्य बहूनि नामानि सन्ति तस्य तस्मान्नाम्नो भं ज्ञेयमित्याकांक्षायामाह । येन नाम्ना प्रसुप्तो मर्त्यो जागर्ति अथवा येन नाम्ना शब्दित आगच्छति । अत्रचेद्बहुता नाम्ना भाषते वा आगच्छति तदा पश्चाद्भवं नाम ग्राह्यम् । अथ यत्र कुत्रचिद्देशे ङञणा वर्णा भवन्ति तदा तत्फलं क्रमेण गजडानां फलेन समम् । तथोक्तं मुहूर्त्तमार्त्तण्डे नारायणदैवज्ञैः । " भं नामादिमवर्णतोचकहडाद्युज्यादिवर्णाद्बवौ तुल्यावत्र शसौ खषौ यदभिधा बह्वोस्य नामान्तिमम्" तट्टीकायामन्यदपि । "खषौ शसौ बवौ चैव ज्ञेयाविति परस्परमिति" । तथान्यच्च । बहूनि यस्य नमानि नर-

स्य स्युः कथञ्चन। तस्य पश्चाद्भवं नामग्राह्यं स्वरविशारदैः॥ तथाचोक्तं नरपतिजयचर्याख्यस्वरशास्त्रे "प्रसुप्तो भाषते येन येनागच्छति शब्दितः॥ यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः। ग्राह्यस्तदादिमो वर्ण इत्युक्तं ब्रह्मयामले॥ न प्रोक्ता ङञडा वर्णा नामादौ सन्ति ते न हि। चेद्भवन्ति तदा ज्ञेया गजडास्ते यथा क्रमम्॥ अत्र स्तम्भस्थावेतौ ( घछौ ) वर्णौ तथा ( षठौ ) [ थभौ ] च तथा फधढाः ) चेति सर्वं पञ्चस्वरैः सममस्ति। अथ यस्य नाम्नि [ ऋ ] स्वरस्तस्य [ इ ] स्वराङ्गीकाराद्भं भवेत्। यथा ऋद्धिनाथ इति नाम्नि शतपदचक्रे [ ऋ ] स्वराभावात् [ इ ] कारोग्राह्यः। एवं कृष्णादि नाम्नि मनुजानां मात्रास्वरग्रहणे ( इ ) स्वरो ग्राह्यः। तथाचोक्तं नरपतिजयचर्याख्यस्वरशास्त्रस्य टीकायाम्। अथ च महाभाष्ये। ऋकारे इकारभागः प्रदर्शितः। अतः सर्वन्निरवद्यम्।

इति श्रीबबुएशर्मणस्तनूजेन श्रीकृष्णदत्ताभिधेन विरचिते जातकक्रोडे सङ्ग्रहवासना समाप्ता॥

## अथ मुहूर्तमार्त्तण्डप्रकरणम्॥

### प्र ( ५ ) षट्षष्टिरृतुसन्धित इति ( १८ )

अत्रोपपत्तिः। अत्र "देवद्वयङ्कर्त्तवोष्टाष्टावित्यादिना॥ मुहूर्तचिन्तामणेर्विवाहप्रकरणोक्तेन रविराशिसन्धिनाडिका रामाग्निमिताः। यदि ता द्विगुणितास्तदा रसाङ्कमिता ऋतुसन्धिनाडिका यतो राशिद्वयभानुभोगात् षडर्तवः स्युः। अथ चन्द्रा-

र्कयोर्गत्यन्तरवशेन तथेन्दुगतिवशेन गतियोगेन च क्रमेण तिथिभयोगानां प्रवृत्ति स्तेन चन्द्रबिम्बमानं स्वस्वगतिकलाभिर्विभक्तं तदा स्वस्वसन्धिनाडिकाः स्युः । तथाचोक्तं सिद्धान्तशिरोमणौ “ शशितनुविकलाभ्यश्चन्द्रभुक्त्येन्दुभानोरित्यादि” ।

अत्रोदाहरणम् । चन्द्रार्कयोर्मध्यमगत्यन्तरेणानेन ७३१ । २७ सवर्णितेन [ ४३८८७ ] षष्टिघटिका लभ्यन्ते तदा सिद्धान्तोक्तेन शशिबिम्बेन ३२ । ० । ६ सवर्णितेनानेन [ १९२० ] किमिति जातम् $\frac{\text{६०} \times \text{१९२०}}{\text{४३८८७}} = \frac{\text{११५२००}}{\text{४३८८७}}$ । अत्र फलं सावयवद्विघटीमितं तिथिसन्धिमानं परमाचार्येणावयवग्रहणं न कृतम् । स्वल्पान्तरादेतन्मितमेव भयोगयोः सन्धिमानं स्वोकृतम् । अत्रेदमवधेयम् । पञ्चाङ्गे स्पष्टानां तिथिभयोगानां व्यवहारस्तेन स्पष्टमानेन सर्वं कर्तव्यमतो व्यवहारार्थमाचार्योक्तमुपपन्नं सर्वम् ।

**( वि० प्र ५ ) सूर्याद्यामदलमित्यादेः सन्त्यर्द्धयामादिष्वन्तं यावत् [ २० ]**

अत्रापपत्तिस्तुमुहूर्तचिन्तामणेः शुभाशुभप्रकरणोक्तेन “सूर्येषट्स्वरनागदिङ्मनुमिताः” इत्यादिना सुगमैवेति बोध्यम् ॥

**( वि० प्र ५ ) पश्चाशज्जिनखाग्नय इत्यारभ्य स्पष्टाः स्युरेवंकृता इत्यन्तं यावत् ( २३ )**

अत्रोपपत्तिस्तुमुहूर्तचिन्तामणेर्विवाहप्रकरणोक्तेन “निघ्नाभभोगेन खतर्कभाजिता” ॥ इत्यादिना सुगमैवेति वेदितव्यम् ॥

( वि० प्र ( ५ ) भागाः स्युर्नतनाडिका इत्यादि (२७)

अत्रोपपत्तिः । अत्र नतकालार्कज्ञाने खलग्नानयनं कृतम् । तात्कालिकार्कोपरिगतं ध्रुवप्रोतवृत्तं नाडीवृत्ते यत्र लग्नं तस्मात्स्वनिरक्षखमध्यं यावन्नतकालः । परञ्च नाडीवृत्ते रूपमितघटिकायां रसमितभागाः सन्त्यतो नतकालो रसघ्नस्तदा नतकालांशाः स्युः । स्वल्पान्तरात्तत्तुल्याः क्रान्तिवृत्तीया भागाः सूर्याद्याम्योत्तरक्रान्तिवृत्तयोः सम्पातावधि स्वीकृताः । पूर्वनते दशमलग्नादग्रे रविःस्यादतो नतकालांशेनोनो रविः खलग्नं स्यात् । परनते तु खलग्नात्पृष्ठे सूर्यस्तेन नतकालांशेन युतो रविः खलग्नं स्यात् । अन्येषां साधनवासना नीलकण्ठोक्तभावसाधनवासनावद्वगम्येत्युपपन्नं सर्वम् ।

[ वि० प्र ५ ) मेषादिश्वजनक्रतौलिकुलीराद्या इत्यादि [ ३१ ]

अत्रोपपत्तिस्तु मुहूर्तचिन्तामणेर्विवाहप्रकरणोक्तस्य "तनोरिष्टांशकात्पूर्वमित्यादेर्लग्नषड्वर्गसाधनवासनावद्बोध्येत्युपपन्नं सर्वम् ॥

[ वि० प्र० ५ ] द्विघ्नेऽर्कोन विलग्नक इत्यादि [३२]

अत्रोपपत्तिः । एकस्मिनहोरात्रे सूर्याक्रान्तराशितः क्रमेण द्वादशराशय उद्गच्छन्ति । तथा चतुर्विंशतिमिताः कालहोरा सन्त्यतोऽनुपातः । एकस्मिन्राशौ कालहोराद्वयं तदा रव्यूनाङ्गभैः किमिति जातं [ २ अं ] कालहोराप्रमाणं तेनोपपन्नं सर्वम् ।

अथ प्रसङ्गाद्विवाहवृन्दावनोक्तपद्यम् ।

( अ ) तत्कालार्कन्यूनलग्नांशपिण्डो भक्तः पञ्च द्वोणिभिर्भुक्तहोराः । भास्वच्छुक्रज्ञेन्दुसौरार्यभौमाः संख्यायैरन्वारतस्तेतदीशाः ॥ ८ ॥

अत्र युक्तिः । खाग्निभागैः कालहोराद्वयं तदा सूर्योनलग्नभागैः किमिति जातम् $\frac{(\text{२ अंभा})}{\text{३०}} = \frac{(\text{अंभा})}{\text{१५}}$ कालहोराप्रमाणं तेनोपपन्नं सर्वम् ॥

संक्रान्त्यन्तरहोहृता दिनगणादाप्तमित्यादि ( ३६ )

अत्रोपपत्तिः । यदि संक्रमणद्वयान्तर्गतदिनैरेको राशिस्तदा प्रथमसंक्रान्तेर्यातदिनगणैः क इति फलं राश्यादिकं मेषाद्यातराशिभिर्युतं तदेष्टार्कः स्यात् । सूर्यलग्नयोर्ज्ञानादिष्टकालानयनवासना मुहूर्तचिन्तामणेर्विवाहप्रकरणोक्तस्य "अर्काल्लग्नात्सायनादित्यादेः" वासनावत्सुगमैवेत्युपपन्नं सर्वम् ।

वि० प्र ५ । लग्नार्कौ यदि चैकभेंशविवरादिति । २७ ।

अत्र पूर्वार्द्धोपपत्तिस्तु मुहूर्तचिन्तामणेर्विवाहप्रकरणोक्तेन चेल्लग्नार्कौ सायनावेकराशावित्यादिना प्रकटैव । परार्द्धेन जलपूर्णकुण्डे स्थापितघटिकादिग्गमनवशात्फलाऽऽशंसनं कृतमतः सर्वन्निरवद्यम् ॥

वा प्र ७ । प्राक्साध्योज्जयनीत्यादि । ५ ।

अत्रोपपत्तिः । चित्रानिलाख्ये नक्षत्रे पूर्वापरवृत्ताद्भिन्नदिग्गते तुल्यान्तरे वेधेन प्रत्यक्षतो दृश्यते । तेन युगपदुदितं तन्नक्षत्रद्वयं नलिकाग्रनिष्ठं कृत्वा नलिकाग्राज्जलवत्सुसमीकृत भूमौ लम्बौ निधाय लम्बमूलद्वये यत्सूत्रं निबध्यते तत्सूत्रं तन्नक्षत्रद्वयस्याग्राप्रमाणयोगतुल्यमर्थान्नक्षत्रैकस्य द्विगुणिताग्राप्रमाणसमं स्यात् । अतो लम्बमूलद्वयबद्धसूत्रार्द्धोपरि रेखागणितरीत्या लम्बरूपा रेखा या सा पूर्वापरा स्यादस्यार्द्धकारिणी लम्बरूपा रेखादक्षिणोत्तरा स्यादेवमवन्तीसमाख्यपत्तनाद्याम्यदिश्यैव यतस्तत्र सुखेन तन्नक्षत्रद्वयं दृश्यं भवेत्तन्नक्षत्रद्वयस्य यमदिग्गतत्वात् । उत्तरदिशि कृत्तिकानक्षत्रावलोकनाद्दिक्साधनं भवति तद्यथा पूर्ववद्वेधेन कृत्तिकानक्षत्रं पूर्वबिन्दावुदितं दृश्यते तेन नलिकाग्रनिष्ठं तन्नक्षत्रं कृत्वा नलिकाग्रमूलाभ्यां लम्बौ कार्यौ तल्लम्बद्वयनिबद्धसूत्रं पूर्वापराख्यं स्यादतः पूर्ववद्याम्योत्तराख्यं सूत्रं बोध्यम् । अथैवं नलिकाग्रसंस्थमुत्तरध्रुवं कृत्वा नलिकाग्रमूलाभ्यां कृतलम्बद्वयमूलनिबद्धसूत्रं याम्योत्तराख्यं स्यात्तदर्द्धोपरि लम्बरूपं सूत्रं पूर्वापराख्यं बोध्यमतः सर्वन्निरवद्यम् ।

[ वा प्र ७ ] मेषेशिवत्रितयं हराविस्यादि [ ११ ]

अत्रोत्तरार्द्धोपपत्तिस्तु मुहूर्त्तचिन्तामणेर्वास्तुप्रकरणोक्तेन "दिक्षुपूर्वादितः" इत्यादिना सुगमैवेति ॥

## [ वा प्र ७ ] आषष्टाद्दशममित्यादि [ १२ ]

अस्योपपत्तिस्तु मुहूर्त्तचिन्तामणेर्वास्तुप्रकरणोक्तेन "तिथ्यर्काष्टाष्टिगोरुद्रशक्के" इत्यादिना सुस्पष्टैवेति ॥ इतिमूहूर्त्तमार्त्तण्डप्रकरणे श्रीकृष्णदत्तरचितवासना समाप्ता ।

## अथ रत्नमालाप्रकरणम् ।

## (प्र १) शकेन्द्रकालः पृथगाकृतिघ्न इत्यादि [ ३ ]

अत्रोपपत्तिः । अथ " बृहस्पतेर्मध्यमराशिभोगात्संवत्सरं सांहितिका वदन्ति ॥ इत्यादिना गुरुमानेन प्रभवादिसंवत्सरः प्रवृत्तिर्भवितुमर्हति । आर्यभट्टमते जिनयमवेदाङ्काग्निमिता (३६४२२४ ) गुरुयुगभगणा द्वादशगुणा स्तदा नागनाङ्काभ्रागाग्निवेदमिता [ ४३७०६८८ ] राशयो भवन्ति एतान्येव चतुर्युगे गुरुवर्षाणि । अथायुताहतरदाब्धिमिताः ( ४३२०००० ) सूर्यभगणा एवार्काब्दाश्चतुर्युगे सन्ति । अथ गुरुवर्षेभ्यो युगसौरवर्षप्रमाणं विशोध्यते तदा नागनागाङ्काभ्रेषुमितं [ ५०६८८ ] शेषं स्याद्तोऽनुपातः युगसौरवर्षैस्तद्वर्षयोरन्तरं तदैकेनकिमिति जातम् [ $\frac{५०६८८\times१}{४३२००००}$ ] अत्र हरभाज्यावनेना-[ २३०४ ] पवर्त्य जातौ [ $\frac{२२}{१८७५}$ ] अत्रेष्टशकभवविवरसाधनार्थमनुपातः। एकस्मिनब्दे पूर्वानीतान्तरं तदेष्टशकसमरविवर्षैः किमितिजातम् [ $\frac{२२ इश}{१८७५}$ ]

अथेदंशके योज्यं तदा गुरुवर्षमानं स्याद्रविवर्षेभ्यो गुरुवर्षाधि-

कत्वात् । परञ्चशकादितः पूर्वं सावयवद्वयं २।३।१३।५२ प्रभवादिगुरुवर्षमानमितमभूत् । एतद्यदि पूर्वानीतगुरुवर्षे योज्यते तदा प्रभवादित इष्टशकावधि गुरुवर्षमानमिति जातम्
[ इश + २२ इश + / १८७५ २।३।१३।५२ ] अत्रान्तिमं खण्डचतुष्टयं समच्छेदत्वाद्धरेण सङ्गुण्य स्वस्वमानेन विभज्य फलं तत्तत्पूर्वखण्डे संयोज्य तदाऽब्दस्थाने शशाङ्कनन्दाश्वियुगमितमुत्पद्यते ततो जातम् इश + [ २२ इश + ४२९१ / १८७५ ] यतः प्रभवादिगुरुवर्षाणि षष्टिमितानि ततः पूर्वानीतफलं षष्टितष्टमित्युपपन्नं सर्वम् ।

## ( प्र ३ ) चरार्द्धदेशान्तरयोरित्यादि ( १२ )

अत्रोपपत्तिः । रेखातः पूर्वदेशे लङ्काक्षितिजात्स्वोन्मण्डलं देशान्तरघटीभिः प्राग्वर्तते । सौम्यगोले स्वोन्मण्डलात्स्वकुजं पूर्वदिग्गतमतश्चरार्द्धदेशान्तरयोगपलैः स्वसूर्योदयादूर्ध्वं लङ्कायां सूर्योदयः ॥ एवं याम्यगोले स्वोन्मण्डलात्स्वक्षितिजस्योर्ध्वगताच्चरार्द्धदेशान्तरविवरपलैरूर्ध्वं तथाधो वारप्रवृत्तिश्चरार्द्धस्य देशान्तराल्पाधिकक्रमात् । परभागे तु गोलक्रमोक्तवैपरीत्याद्बोध्यमिति । अत्रेदमवधेयम् । पूर्वदेशे देशान्तरमृणं तथा गोलक्रमाच्चरार्द्धमपि क्षयधनाख्यं तेनोत्तरगोले क्षयात्मकदेशान्तरद्वययोगे क्षयाख्य चोर्ध्वं तथायाम्ये धनर्णदेशान्तरान्तरे क्षयाख्ये सत्यूर्ध्वं चरस्य देशान्तराल्पत्वात् । एवं यदा देशान्तराच्चर-

मधिकं तदा तदन्तरधनेऽधोवारप्रवृत्तिः । अत्रापि परदेशे गोलवैपरीत्यादवगम्यमिति । परञ्च महादेवाभिधेन गणकेन तट्टीकाकारेण यदुक्तं पूर्वापरदेशवशाद्देशान्तरं धनर्णाख्यं भवति तद्युक्तं नेति सुजनगणकैर्विभावनीयम् । एतेन "चरार्धदेशान्तरयुग्वियोगौ क्रमेण याम्योत्तरगोलगेऽर्के । योगे पुरा रव्युदयाद्वियोगे पश्चात्प्रवृत्तिर्दिनवारकर्तुः ॥ इति विवाहवृन्दावनोक्तमुपपन्नं भवेत् ।

## (प्र ३) वारप्रवृत्तेर्घटिका इत्यादि ( २१ )

अत्रोपपत्तिस्तुमुहूर्त्तचिन्तामणिनिष्ठकालहोरावासनावद्बोध्येति ।

## ( प्र ६ ) पूर्वतोपि परतोपि सङ्क्रमादित्यादि [८]

अत्रोपपत्तिर्मुहूर्त्तचिन्तामणिस्थसंक्रान्तिकालवासनावदवगम्येति ॥ इति श्रीकृष्णदत्तविरचिते जातकक्रोडे रत्नमालावासना समाप्ता ॥





## अथ मुहूर्त्तचिन्तामणेः शेषवासना ।

## ( प्र २ ) सैकातिथिर्वारयुतेति ( ३५ )

अत्रोपपत्तिः । अत्र तिथयस्तु पाक्षिका ग्राह्या एतदर्थस्य वासनाविहितत्वात् । परञ्चेदानीन्तनैस्तट्टीकाकारैः तदपि तन्मतं नाशितमिति । अत्र कल्पादेर्दिनगणप्रमाणं यावत्तावत्प्रकल्प्यामारहिततिथिसाधनार्थमनुपातः । त्रिंशद्दिनैश्चतुर्दशतिथयो लभ्यन्ते तदा यावत्ता का इति रूपं $\frac{\text{या १४}}{\text{३०}} = \frac{\text{या ७}}{\text{१५}}$

अत्रलब्धिप्रमाणं कालकं प्रकल्प्य शेषं तिथितुल्यञ्चेति हरलब्धि-घातः शेषयुतो भाज्यराशिसम इति जातौ या ७ = का १५ + ति पक्षावनेन (७) भक्ताविति रूपं $\text{या} = \frac{\text{का १५ + ति}}{\text{७}}$ अथ पूर्व-कल्पितयावत्तावत्प्रमाणं सप्तभक्तं $\frac{\text{या}}{\text{७}}$ फलं नीलकसमं शेषं वार-तुल्यं प्रकल्प्य पूर्वरीत्या जातं यावत्तावन्मानं या = नी ७ + वा पूर्वमानेन सममिति जातौ पक्षौ $\frac{\text{का १५ + ति}}{\text{७}} = \text{नी ७ + वा}$ छेदापगमाज्जातौ का १५ + ति = नी ४९ + वा ७ अनेन ( ति )-पक्षावूनितावनेन ( १५ ) भक्तौ जाता कालकोन्मितिः $\text{का} = \frac{\text{नी ४६ + वा ७ − ति}}{\text{१५}}$ "अन्त्योन्मितौ कुट्टविधेर्गुणाप्तो ते भाज्यतद्भाजकवर्णमाने" इत्यादिना ( ४९ ) = भाज्यः क्षेपः = वा ७–तिहारः [ १५ ] इति प्रकल्प्य रूपक्षेपे जातावल्ली ३ ततो लब्धिगुणौ १३ स्वतक्षणाभ्यां शोधितौ जातौ १६, ३ लब्धीनां ४ वैषम्यात्। एवमृणक्षेपेलब्धिवैषम्ये ११, १ यथागतौ लब्धि-गुणौ १३। अभीप्सितक्षेपविशुद्धिनिघ्ने १ स्वहारतष्टे,, इत्या-दिना ४ स्वस्वगुणेन धनर्णक्षेपं ० ( वा ७–ति ) सङ्गुण्य स्वहारतष्टं च कृत्वा जातोऽभीष्टक्षेपे गुणः ( वा २ + ति ४ ) अत्रेदमवधेयम्। यदि वारात्तिथिप्रमाणमधिकं तदा क्षयात्मक-क्षेपस्तदन्यथा धनात्मकश्च। विशुद्धिक्षेपः स्वगुणेन ( ४ ) निघ्नः

स्वहारतष्टो जातमृणं गुणमानं वा १३ + ति ४ अत्र यथा धनात्मकं तथैकगुणहरः प्रथमखण्डे योज्यस्तदा गुणः वा २ + ति ४ । एवं धनक्षेपः स्वगुणेन ( ११ ) निघ्नः स्वहारतष्टो जातो गुणः वा २-ति ११ अत्राप्यैकगुणो हरो द्वितीयखण्डे पूर्ववद्योज्यस्तदा जातो गुणः वा २ + ति ४ । अत्रेष्टं पीतकं प्रकल्प्य "इष्टाहतस्वस्वहरेण,, इत्यादिना गुणकमानं गु=( पी १५ + वा २ + ति ४ ) एतदेवनीलकवर्णमानं नी=पी १५+वा २+ ति ४ अनेन पूर्वानीतयावत्तावदुन्मितौ नी ७ + वा नीलकमुत्थाप्य जाता यावत्तावदुन्मितिः या=पी १०५+वा १४+ति २८+वा अत्रेष्टेन ( ति+वा २+रू १ ) पीतकमानमुत्थाप्य जातं यावत्तावन्मानं या=ति १०५+वा २१०+रू १०५+वा १४ + ति २८ + वा सजातीयानां योगे कृते जातं ति १३३ + वा २२५ रू १०५ चतुर्लोककल्पनावशाच्चतुर्भिस्तष्टं तज्जातं कल्पगतदिनगणप्रमाणं (ति १३३ + वा २२५ + रू १०५)/४ वा = (ति १ + वा १ + रू १)/४ तेनोपपन्नं सर्वम् ।



## प्र ( ३ ) सन्ध्या त्रिनाडीप्रमितेत्यादि ( ७ )

अत्र युक्तिः । निरक्षक्षितिजादधश्चोर्ध्वं यदा नाडीवृत्तस्थो रविर्धृतिभागान्तरे वर्त्तते तदा तद्देशे रोमदर्शनात्त्रिनाडी सन्ध्या स्याद्यतो नाडीवृत्तीयैकांशे घटिका रूपमिता स्यात् । यदेष्टदृग्

मण्डले कुजाद्धृतिभागान्तरे रविस्तदा गोलयुक्तयोन्नतांशबोधादुन्नतकालमानं यत्तदेव सन्ध्याप्रमाणम् । साक्षदेशेक्षितिजादध ऊर्ध्वमष्टादशांशान्तरे यदा दृग्वृत्तस्थोर्को भवेत्तदा तदंशबोधाद्गोलयुक्त्योन्नतकालमानं सन्ध्याकालः स्याद्रोमदर्शनाशेनोपपन्नं सर्वं व्यवहारयोग्यम् ॥

## प्र ( ६ ) पश्चास्याजौगोमृगाविस्यादि ( ६१ )

अत्रोपपत्तिः । यदार्कापमश्चन्द्रस्फुटापमेन समस्तदैव पातो भवेत् । तत्राप्ययनभेदे गोलैकत्वे चन्द्रार्कयोः क्रान्तिसाम्ये व्यतिपातस्तदन्यथा वैधृतिः । तथोक्तं ग्रहगणिते श्रीभास्कराचार्यैः "व्यतिपातोऽयनभेदे गोलैकत्वेऽर्कचन्द्रयोः क्रान्त्योः । साम्ये वैधृति एकायनेऽन्यदिगपक्रमसमत्वे„ अत्र व्यवहारार्थं ग्रन्थकारेण चन्द्रापमो मध्यम एव स्वीकृतः । ततश्चन्द्रार्कयोर्मध्ये यदैक प्रथमपदे यावद्गृहाद्यवयवे तावद्गृहाद्यवयवे द्वितीयपदान्तात्पष्ठे द्वितयः । अथवा द्वितीयपदान्ताद्यावद्गृहाद्यवयवे त्वैकस्तावद्गृहाद्यवयवे तुर्यपदान्तात्पष्ठे द्वितीयस्तदा भुजांशानां समत्वादपमयोःसमत्वं जातमत्र लक्षणे सायनरविशशियोगो भार्धमतो व्यतिपाताभिधो योगः स्यादन्यथा कथं व्यतिपातलक्षणं घटते । एवं यदैकः प्रथमगोले यावद्गृहाद्यवयवे तावद्गृहाद्यवयवे द्वितीयगोलान्तात्पृष्ठे द्वितीयस्तदा सायनरविशशियोगस्य चक्रसमत्वाद्वैधृतिनामा योगस्तदन्यथा कथं पूर्वोक्तं तल्लक्षणं सङ्गच्छते । तथोक्तं सिद्धान्तशिरोमणौ श्रीभा-

स्कराचार्यैः 'सायनरविशशियोगो भार्धं चक्रं यदा तदासन्नः । तत्सम्भवस्तदूनाधिकलिप्ता भुक्तियोगहृताः" ॥ अथ प्रस्तुतमुच्यते, मेषान्तसिंहान्तस्थयोस्तथा तौलिकुम्भान्तस्थयोः कन्यामीनान्तस्थयोरर्कचन्द्रयोर्भुजांशानां समत्वादपमसाम्ये कथितरीत्या व्यतीपातनामा योगः । एवं वृषमकरान्तस्थयोस्तथा कर्कवृश्चिकान्तस्थयोश्चापमिथुनान्तगतयोस्तयोर्भुजांशसमत्वात्क्रान्तिसाम्ये पूर्वोक्तलक्षणेन वैधृतिनामा योगः । परञ्चैवं वृषकीटान्तयोस्तथा वृश्चिकमकरान्तयोस्तुलाकुम्भान्तस्थयोश्चापमसाम्ये व्यतिपातलक्षणसम्प्राप्तेऽपि तत्सम्भवः । एवं मेषान्तकुम्भान्तगतयोस्तथा सिंहतुलाधरान्तस्थयोस्तयोः क्रान्तिसाम्ये वैधृतिलक्षणजातेऽपि तत्सम्भवो ग्रन्थकारेण नोक्तो विवाहाविहितभात्तथार्कराशिदोषाच्च । अत्रेदमवधेयम् । चन्द्रस्पष्टापमवशाद्वास्तवपातद्वयज्ञानं सिद्धान्तरीत्या वरीवर्त्ति परन्तु तत्साधनं ग्रन्थगौरवभयेनास्माभिर्नोक्तमिति सुजनगणैर्निपुणं विभाव्यमित्यलं प्रसङ्गागतविचारेण ॥

## (प्र ६) देवद्व्यङ्कर्त्तवोष्टाष्टावित्यादि (८०)

अत्र युक्तिः । अत्रानुपातः । स्वल्पान्तराद्द्विगतिकलाभिः षष्टिमिताभिः षष्टिघटिकास्तदा रविबिम्बकलाभिः ३२ । ३१ । ३३ का इति जातं बिम्बकलासमं राशिसन्धिमानं परन्तु वास्तवमध्यगतिवशाद्देवमितम् ( ३३ ) एवं चन्द्रबिम्बकलामानं ३२ । ० । ६ षष्टिगुणं निजगत्या विभक्तं फलं सावयवद्विमितं

परमाचार्यैरवयवग्रहणं न कृतम्। तथा कुजबिम्बमानं ४। ४५ सवर्णितं ( २८५ ) षष्टिगुणं ( १७१०० ) स्वगतिकलाभिः ३१। २६ सवर्णिताभिः ( १२८६ ) भक्तं फलं ( ९ ) शेषग्रहणाभावात् एवं बुधादीनां बिम्बकलाः बु=६। १५। बृ=७। २० शु=९। श.=५।२० सिद्धान्तशिरोमणौ श्रीभास्कराचार्यैः पठिताः त्र्यङ्घ्रीषवः सचरणा श्रुतवस्त्रिभागयुक्ताद्रयो नव च सत्रिलवेषवश्च। स्युर्मध्यमास्तनुकला क्षितिजादिकानाम्" इत्यादिना। अथ पूर्ववद्बुधादीनां राशिसन्धिमानं बोध्यं तेनोपपन्नं व्यवहारयोग्यं सर्वम्॥

## अथ प्रसङ्गान्मकरन्दोक्ताहर्गणानयनवासना। शाको नवाद्रीन्दुकृशानुयुक्त इत्यादि॥

अत्र वासना। शकादौ नवाद्रीन्द्वग्निमिताः कलिगताब्दा यातास्तत एभिर्युतः शकः कल्यादेर्गतसौरवर्षान्तावधि सौरवर्षगणः स्यात्तस्य मासात्मककरणार्थमनुपातः। एकवर्षेणार्कमितमासास्तदेष्टवर्षैः किमिति जातो मासगणः। अत्रार्कमासाज्ञानात्तथा रविवर्षान्ताज्ञानाच्च सिद्धान्तोक्तत्वच्चैत्रादिमासगणा युतास्तदा गतचान्द्रमासान्तं यावत्सौरमासगणस्तत्राधिमासा योज्यास्तदा चान्द्रमासगणः सौरचान्द्रान्तरत्वादधिमासस्य। अथाधिमासार्थमनुपातः। युगसौरमासैरेतैः १४८०००० सौरोक्तयुगाधिमासा १५९३३३३६ स्तदैष्टसौरमासैः किमित्यत्र इसौ १४८०००० हरस्य त्र्यग्निभागैर्गुणहरावपवर्त्य हरस्थाने

१५९३३३३६

देवमितस्तथा गुणकस्थाने सशेषं रूपं जातमत्रापि शेषेण शेषं हरश्चापवर्त्य जातं क्रमेण रूपं सप्ततिमितिश्चेति $\frac{\text{इसौ}}{३३}\left(१+\frac{१}{७०}\right)=$ $\left(\frac{\text{इसौ}}{३३}+\frac{\text{इसौ}}{७०}\right)=\frac{\text{इसौ}}{३३}+\text{फ}=$ अमा । अथ त्रिंशद्गुणितचान्द्रमासगणेषु शुक्लप्रतिपदादिगततिथयो योज्यास्तदेष्टतिथ्याद्यैः चान्द्राहर्गणः स्यादत्रावमानि शोध्यानि तदा सावनाहर्गणः स्यादवमस्य सावनोनचान्द्रसमत्वात् । अथावमसाधनार्थमनुपातः । युगचान्द्रदिनै. १६०३०००००८० र्युगावमानि २५०८२२५२ तदेष्टचान्द्रदिनैः किमित्यत्र गुणकस्यैकादशांशेन गुणहरावपवर्त्य गुणकस्थाने रुद्रमिता हरस्थाने त्र्यभ्राद्रिमिता जाता इति $\frac{\text{इचा}\ ११}{७०३}=$ क्षदि अधिमासावमशेषयोस्त्यागकारणं सैकनिरेककारणञ्चेति सिद्धान्तोक्तवद्बोध्यम् । अथ शुक्रनिशार्धैः कल्यादेः प्रवृत्तिस्तेन सर्वमुपपन्नम् ॥

## शाकमेकाक्षिवेदोनमित्यादि ॥

अत्र वासना । दिनार्धद्वादशाङ्गुलनरभामुपलक्ष्य "दिनार्धद्युतेस्त्रिज्यकाघ्न्या हृताया स्वकर्णेन" इत्यादिभास्करीयसिद्धान्तशिरोमणियुक्तपद्येनापमभागान् ज्ञात्वा तद्विलोमेनार्कभुजांशाः साध्यास्तथा तत्कालिकगणितागतस्फुटार्कभुजभागाश्च तयोरन्तरमयनांशा एवमिष्टदिने तथा वर्षान्तसमयेप्ययनभागान् ज्ञात्वा तदन्तरं वार्षिकी तद्गतिः स्यादेवं सा चतुष्पञ्चाशद्विकला भवति । एवमेकाक्षिवेदमिते शाके तद्गणपूर्त्तिस्तेनैकाक्षिवे-

दोन इष्टशकस्तदाऽयनांशाभावसमयादिष्टशकपर्यन्तं वर्षाणि स्युः । अत्रानुपातः । एकवर्षेण चतुष्पञ्चाशद्विकलासमा अयनभागास्तदेभिर्वर्षैः किमित्यत्र फलं कलात्मककरणार्थं षष्टिभक्तं जातम् $\frac{\text{श ५४}}{\text{६०}}$ अत्र गुणहरौ रसेनापवर्त्य जातम् $\frac{\text{श ९}}{\text{१०}}$=श $\frac{[\text{१०-१}]}{\text{१०}}$

=$\frac{\text{श १०}}{\text{१०}}$—$\frac{\text{श}}{\text{१०}}$=$\frac{\text{श—श}}{\text{१०}}$ अत उपपन्नं सर्वम् ॥

## सायनार्कभुजमित्यादि ।

अत्रोपपत्तिः । अक्षप्रभासङ्गुणितापमज्या,, इत्यादि सिद्धान्तशिरोमणिनिष्ठपद्येनैकद्वित्रिराशीनां पृथक् चराण्यानीय तानि पलात्मककरणार्थं षड्भिर्विभज्याधोधः शोध्यान्येवं मेषादित्रयाणां चराणिस्युस्तान्येवोत्क्रमेण कीटादीनां पुनः क्रमोत्क्रमाभ्यां तुलादिषण्णां स्युः । अथार्कराशिभवचरपलसाधनार्थं सायनार्कभुजराशिमितचरखण्डयोगः कार्यः । अंशादिभवचरार्थमनुपातः । खाग्निभागैर्भोग्यखण्डं तदेष्टभागाद्यै किमिति फलं गतखण्डयोगे योज्यं तदेष्टचरपलानि स्युः । अथ प्रागुन्मण्डलादधोयाम्योत्तरवृत्तावधि परभागे द्युरात्रवृत्ते पञ्चचत्वारिंशद्घटिकास्ताः सौम्ययाम्यगोलक्रमेण चरघटीभिर्युतोनितास्तदोदयकुजादधोयाम्योत्तरवृत्तावधि घटिकाःस्युस्तासां मिश्रमानसंज्ञेतिसमुचितमेव दिनमानरात्रिदलयोगवशात् । अथ द्विगुणितमिश्रमानं षष्टियुतदिनमानं स्यान्मिश्रमानस्य त्रिंशद्दिनार्धयोगरूपत्वात् । अतो द्विगुणितमिश्रमानं षष्टिवर्जितं दिनमानं भवतीत्युपपन्नं सर्वम् ॥

॥ इति समाप्तम् ॥